TRIVANDRUM SANSKRIT SERIES.

NO. XIX.

# THE MÂNAMEYODAYA

OF

NÂRÂYAṆA BHATTA

AND

NÂRÂYANA PANDITA

EDITED BY

T. GAṆAPATI SÂSTRÎ

*Curator of the Department for the publication of Sanskrit manuscripts*

TRIVANDRUM.



PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.



TRIVANDRUM:

PRINTED AT THE TRAVANCORE GOVERNMENT PRESS.

1912.

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १९.

# मानमेयोदयः

नारायणभट्ट-नारायणपण्डिताभ्यां प्रणीतः

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

त. गणपतिशास्त्रिणा

संशोधितः ।

स च

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशितः ।




कोळम्बाब्दाः १०८७, क्रैस्ताब्दाः १९१२.

# PREFACE.

*Mânameyodaya* is a treatise on *Pûrvamîmâmsâ*, containing two *Parichchhedas*, मानपरिच्छेद and मेयपरिच्छेद. Refuting the views of other schools of philosophy, it explains *Pramâṇas* and *Prameyas* in the two *Parichchhedas* respectively, in the light of *Kumârilabhatta's* school of *Pûrvamîmâmsâ*, and forms more than any other work an easy introduction to the subject of *Pûrvamîmâmsâ*.

The first part of the work was written by *Nârâyaṇa Bhatta*, the well-known poet of *Kerala*, of whom an account was given in the preface to *Nârâyaṇîya*. He had also intended to write the second part of the work as is evident from the following introductory verse of the work:—

"मानमेयविभागेन वस्तूनां द्विविधा स्थितिः ।
अतस्तदुभयं ब्रूमः श्रीमत्कौमारिलाध्वना ॥"

but, for reasons unknown, he had left it unfinished, because it is known to have been completed, at the instance of *Mânaveda*, king of *Sailâbdhi* (Calicut) by another *Nârâyaṇa Paṇdita*, a disciple of *Krishṇa*, as the concluding stanzas of the work show:—

"यत्कीर्तिर्न हि माति हन्त महति ब्रह्माण्डभाण्डोदरे
यस्याज्ञां प्रणतैः शिरोभिरनिशं धत्ते नृपाणां गणः ।
सोऽयं नाटकतर्ककाव्यनिपुणः प्रज्ञातपातञ्जलो
भक्तश्चक्रिणि मानवेदनृपतिर्जागर्ति धात्रीतटे ॥

पृथ्वीवृत्रजिता नितान्तमहितेनैतेन संचोदितै-
रस्माभिः कृशशेमुषीविलसितैरभ्यासहीनैरपि ।
प्राङ् नारायणसूरिणार्धरचितं तन्मानमेयोदयं
मोहात् पूरयितुं कृता मतिरियं सन्तः प्रसीदन्तु नः ॥"

"यः ख्यातः पुरुषोत्तमस्त्रिजगति प्रज्ञाकवित्वादिभिः
पुत्र्यास्तस्य सुतस्तदीयतनयात् कौमारतन्त्राम्बुधेः ।

सुब्रह्मण्य इति त्रिलोकविदितादापीतशास्त्रामृतः
सोऽहं पूरितवानिदं प्रकरणं नाम्ना च नारायणः ॥"

The following works are known to have been written by this author from the last stanzas of each sarga of his commentary on *Kumârasambhava*:—

1. Mânameyodaya.
2. Srîmâsotsavachampû.
3. Âsleshasatakâdi.
4. Bhâgavataprabandha.
5. Nrisimhachampû.
6. Vaidehînavasamgamachampû.

Amongst these, the commentary of *Kumârasambhava* has been undertaken for publication in this series.

The present edition of the work is based on two manuscripts named क and ख, the first of them, running up to the end of the first *Parichchheda*, was obtained from Manalikkara Matham, and the second from the Palace Library. Both these manuscripts are written in Malayalam characters and are almost accurate.

Trivandrum.

T. GANAPATI SÂSTRÎ.

# निवेदना ।

एष **मानमेयोदया**ख्यः पूर्वमीमांसाग्रन्थः । अत्र द्वौ परिच्छेदौ मानपरिच्छेदो मेयपरिच्छेद इति । आद्ये प्रमाणानि द्वितीये प्रमेयानि च **कुमारिल**मतानुसारेण परमतनिराकरणपूर्वं निपुणं निरूपितानि । मीमांसकसम्मतानां पदार्थानामेतदपेक्षया सुखतरव्युत्पादको ग्रन्थोऽतिविरल एव ।

तत्र प्रमाणपरिच्छेदस्य प्रणेता पण्डितकविचूडामणिः केरलीयो **नारायणभट्टः**, यस्य वृत्तान्तं **नारायणीयो**पोद्घाते वितत्यावोचाम । यद्यपि —

"मानमेयविभागेन वस्तूनां द्विविधा स्थितिः ।
अतस्तदुभयं ब्रूमः श्रीमत्कौमारिलाध्वना ॥"

इति प्रमेयपरिच्छेदोऽपि चिकीर्षिततयानेन प्रतिज्ञातः, तथापि कुतश्चिदसौकर्याद्, मन्ये, स न कृतः । अत एवार्धनिर्मितमिमं ग्रन्थं **शैलाब्धीश्वर**स्य **मानवेद**नृपतेश्चोदनानुसारात् प्रमेयपरिच्छेदरचनया **कृष्ण**शिष्योऽन्यो **नारायण**पण्डितः पूरयामास । तथाच ग्रन्थान्ते श्लोकाः —

"यत्कीर्तिर्न हि माति हन्त महति ब्रह्माण्डभाण्डोदरे
यस्याज्ञां प्रणतैः शिरोभिरनिशं धत्ते नृपाणां गणः ।
सोऽयं नाटकतर्ककाव्यनिपुणः प्रज्ञातपातञ्जलो
भक्तश्चाक्रिणि मानवेदनृपतिर्जागर्ति धात्रीतटे ॥

पृथ्वीवृत्रजिता नितान्तमहितेनैतेन सञ्चोदितै-
रस्माभिः कृशशेमुषीविलसितैरभ्यासहीनैरपि ।
प्राङ् नारायणसूरिणार्धरचितं तन्मानमेयोदयं
मोहात् पूरयितुं कृता मतिरियं सन्तः प्रसीदन्तु नः ॥"

"यः ख्यातः पुरुषोत्तमस्त्रिजगति प्रज्ञाकवित्वादिभिः
पुत्र्यास्तस्य सुतस्तदीयतनयात् कौमारतन्त्राम्बुधेः ।

सुब्रह्मण्य इति त्रिलोकाविदितादापीतशास्त्रामृतः
सोऽयं पूरितवानिदं प्रकरणं नाम्ना च नारायणः ॥"

इति ।

एतत्प्रणीतस्य **कुमारसम्भवविवरणस्य** सर्गान्तिमपद्येभ्योऽवगता एतत्कृतयस्त्वेता भवन्ति —

१ मानमेयोदयः ।
२ श्रीमासोत्सवचम्पूः ।
३ आश्लेषशतकादि ।
४ भागवतप्रबन्धः ।
५ नृसिंहचम्पूः ।
६ वैदेहीनवसङ्गमचम्पूः ।

तत्र **कुमारसम्भवविवरणम्** अस्यां ग्रन्थावलौ जिग्रथयिषुभिरस्माभिः संशोधनायोपात्तमस्ति ।

अस्य ग्रन्थस्य द्वावादर्शावाश्रित्य संशोधनं निर्वर्तितम् । तयोरेको **मणलिक्करमठीयः** प्रमाणपरिच्छेदान्तः क. संज्ञितः, द्वितीयो राजकीयग्रन्थशालास्थः समग्रः ख. संज्ञितः । द्वावप्येतौ केरलीयलिपी प्रायः शुद्धौ च ॥

अनन्तशयनम्. **त. गणपतिशास्त्री.**

॥ श्रीः ॥

श्रीनारायणभट्टप्रणीतः

# मानमेयोदयः ।

## प्रमाणपरिच्छेदः ।

### प्रत्यक्षपरीक्षा ।

आचार्यमतपाथोधौ बालानपि निनीषताम् ।
धीमतां कोऽपि गोपालपोतः पोत इवास्तु नः ॥ १ ॥
मानमेयविभागेन वस्तूनां द्विविधा स्थितिः ।
अतस्तदुभयं ब्रूमः श्रीमत्कौमारिलाध्वना ॥ २ ॥
प्रमाकरणमेवात्र प्रमाणं तर्कपक्षवत् ।
प्रमा चाज्ञाततत्त्वार्थज्ञानमित्येव भिद्यते ॥ ३ ॥

अज्ञातपदेनात्र ज्ञातविषययोः स्मृत्यनुवादयोर्निरासः । तत्रानुवादानामप्रामाण्यं तार्किकादीनां नानुमतम् । वयं तु ब्रूमः । अनुवादो ह्यर्थपरिच्छेदे व्यवहारे वा न पूर्वज्ञानात् कञ्चिद् विशेषमाधत्ते । अतः फलविशेषाभावात् फलार्थं च प्रमाणानां स्वीकरणात् स्मृत्यादिवदनुवादोऽपि बहिष्कार्य एवेति । नन्वज्ञातावगमस्यैव प्रमात्वे घटोऽयं घटोऽयमिति धारावाहिकज्ञानेषु द्वितीयादीनामप्रमात्वं स्यात् । मैवम् । तत्राप्ययमयमित्युत्तरोत्तरेषां कालांशानामज्ञातानामवगमाद् उत्तरे क्षणे

घटादिसद्भावस्य च पूर्वज्ञानेनानधिगतत्वात् । ननु कालभेद-स्यौपाधिकत्वात् केनोपाधिनावच्छिन्नानां कालांशानामत्रावगम इति वक्तव्यम् । उच्यते । पूर्वपूर्वज्ञानैर्जनितानां[1] प्राकट्याना-मुत्तरोत्तरज्ञानपर्यन्तमवस्थानात् तदवच्छिन्नानां कालांशानां तत्र तत्रावगम इति । न च प्राकट्यभेदानां सूक्ष्मत्वात् तदवच्छि-न्नानां कालभेदानामपि सूक्ष्मतया दुरवगमत्वमिति वाच्यम् । सूक्ष्मत्वे कमलदलशतं सूच्या युगपद् भिन्नमितिवत् सकृदव-बुद्धो घट इति यौगपद्याभिमानप्रसङ्गात् । इह त्वयमयमिति पुनः पुनः क्रमेणैव प्रतीतेर्धारावाहिकस्वभावसिद्धत्वाद् यौगपद्याभि-मानस्य विरोध एव । तस्मात् प्राकट्यभेदानां कालभेदानां च न सूक्ष्मत्वम् । ननु[2] प्राकट्यस्यैवाभावात् कालस्य च प्रत्यक्षत्वा-भावात् कथं कालांशावगम इति चेद्, न । तयोः[3] साधयिष्य-माणत्वादिति । तत्त्वपदेन भ्रमसंशयादीनामयथार्थज्ञानानां नि-रासः । तत्रायथार्थज्ञानस्याभावात् तत्त्वपदमनर्थकमिति प्राभा-कराः प्राहुः । एवं हि तेषां मतम्—इदं रजतमित्यत्रेदमित्य-गृहीतविशेषं शुक्तिशकलं गृह्यते । रजतमिति च रजतमात्रं स्मर्यते । तयोश्च भेदाग्रहात् पुरोवर्तिनि[4] रजतार्थिनः प्रवृत्तिः, न तु शुक्तिशकलस्य रजतत्वेन भानमस्तीति[5] । (तत्) तत्त्व-ज्ज्ञानस्य स्वविषय एव प्रवृत्तिकरत्वनियमाद् रजतज्ञानस्यापीदं-

१. 'नज' ख. पाठः. २. 'नु कालस्याप्रत्यक्षत्वात् क' ख. पाठः. ३. 'काल-प्रत्यक्षत्वस्य वक्ष्यमा' ख. पाठः. ४. 'नि प्र' ख. पाठः. ५. 'ति । तदयु(क्तं ज्ञान)स्य हि स्व' ख. पाठः.

विषयत्वाभावे तत्र प्रवृत्तिर्न सिध्येत्, तथेदमेव रजतमिति सामानाधिकरण्यं तयोरभेदप्रतीतिं विना न सिध्येदित्यादिदिशा[1] निराकरणीयम् । तस्मादन्यथाग्रहणरूपभ्रमादिज्ञानसद्भावात् तन्निरासार्थं तत्त्वपदम्। तदेवमज्ञाततत्त्वावगमरूपायाः प्रमायाः करणत्वेनेन्द्रियसन्निकर्षादीनां प्रमाणत्वं सिद्धम्। इह च प्रमाशब्देन लक्षणया तत्कार्यभूतस्य प्राकट्यस्यापि प्रतिपादनात् प्राकट्यरूपप्रमाकरणत्वेन ज्ञानस्यापि प्रमाणत्वमाहुः[2]। एतावता च वयं फलप्रमाणवादिन इति गीयामहे। तार्किकास्तु 'प्रमाकरणं प्रमाणम्। यथार्थानुभवः प्रमा। अनुभवश्च स्मृतिव्यतिरिक्तं ज्ञानमि'ति लक्षयन्ति। तद् अनुवादस्याप्रामाण्यसाधनात् तद्व्यावर्तकस्य च पदस्यात्राभावादतिव्याप्तम्। 'अनुभूतिः प्रमाणम्। स्मृतिव्यतिरिक्ता च संविदनुभूतिरि'ति प्राभाकराः। तदपि भ्रमादीनां साधनात् तेषामपि स्मृतिव्यतिरिक्तत्वात् तेष्वतिव्याप्तम्। किञ्च सर्वज्ञानेष्वप्यात्मा ज्ञानस्वरूपं विषय इति त्रितयमपि प्रकाशते। सर्वत्र चात्मस्वात्मांशयोः प्रमाणत्वं प्रत्यक्षत्वमप्यस्तीति तेषां मतम्। ततश्च स्मृतिव्यतिरिक्तज्ञानस्यैव प्रमाणत्वे स्मृतेरात्मस्वात्मांशयोरप्रामाण्यं स्यादित्यव्याप्तिरप्यस्तीति। 'अविसंवादि विज्ञानं प्रमाणम्[3]। अविसंवादित्वं चार्थक्रियाकारित्व[4]मि'ति बौद्धाः। तत्र भूतभविष्यद्विषयस्यानुमानस्या-

---

१. 'दियुक्तिर्द्रष्टव्या। त' ख. पाठः. २. 'हुः। ता' ख. पाठः. ३. 'मिति बौद्धाः। अ' ख. पाठः. ४. 'त्वाभा' ख. पाठः.

र्थक्रियाकारित्वाभावादप्रामाण्यं स्यात्, स्मृतेश्च क्वचिदर्थक्रिया-कारित्वात् प्रामाण्यं स्याद्, इति ।

तस्मादज्ञाततत्त्वार्थज्ञानसाधनमेव नः ।
प्रमाणमिति निर्णीतं तद्विशेषानथ ब्रुवे ॥ ४ ॥

प्रत्यक्षमनुमानं च शाब्दं चोपमितिस्तथा ।
अर्थापत्तिरभावश्च षट् प्रमाणानि मादृशाम् ॥ ५ ॥

चार्वाकास्तावदेकं द्वितयमपि पुनर्बौद्धवैशेषिकौ द्वौ
भासर्वज्ञश्च साङ्ख्यस्त्रितयमुदयनाद्याश्चतुष्कं वदन्ति ।
प्राहुः प्राभाकराः पञ्चकमपि च वयं तेऽपि वेदान्तविज्ञाः
षट्कं पौराणिकास्त्वष्टकमभिदधिरे सम्भवैतिह्ययोगात् ॥

तत्र इन्द्रियसन्निकर्षजं प्रमाणं प्रत्यक्षम् । कानि पुनरि-न्द्रियाणि । उच्यते । चक्षूरसनघ्राणस्पर्शनश्रोत्राणि मनश्चेति षडिन्द्रियाणि ।

चक्षुर्नाम कनीनिकान्तरगतं तेजोऽथ जिह्वाग्रग-
स्तोयांशो रसनं क्षितेरवयवो घ्राणं च घोणोदरे ।
सर्वाङ्गप्रसृताश्च मारुतलवास्त्वङ् नाम कर्णोदर-
व्योमैव श्रवणं मनस्तु विभु तद् देहे च कार्यावहम् ॥

तत्र रूपज्ञानस्य केनचित् कारणेन भवितव्यमिति सा-मान्येन सिद्धौ दीपादितेजस एव रूपज्ञानहेतुत्वदर्शनात् तैजसं चक्षुः कल्प्यते । तथा रसज्ञानस्यापि कारणकल्पनायां रसव्य-ञ्जकत्वमपामेव शुष्कवस्तुषु दृष्टमिति रसनमाप्यतया कल्प्यते । एवं चन्दनगतस्य पार्थिवनिम्बत्वगनुलेपनस्य गन्धाभिव्यञ्जक-त्वदर्शनाद् गन्धाभिव्यञ्जकत्वेन कल्प्यमानं घ्राणं पार्थिवं

भवति । व्यजनपत्रनस्य चाङ्गसङ्गिसलिलस्पर्शाभिव्यञ्जकत्वदर्शनात् स्पर्शोपलम्भकस्य त्वगिन्द्रियस्य वायवीयत्वम् । शब्दग्राहकतया कल्प्यस्य श्रोत्रस्य तु [1]परिशेषादाकाशात्मकत्वम् । चक्षुरादीनां खल्वन्येन्द्रियारम्भकेणारब्धत्वं न दृष्टमिति तेजःप्रभृतीनामन्येन्द्रियारम्भकत्वात् तेषां श्रोत्रत्वं न भवति । भूतात्मकत्वमेव च बहिरिन्द्रियाणां दृष्टमित्यवशिष्टस्याकाशाख्यस्य भूतस्यैव श्रोत्रत्वमिति । **तार्किका[2]स्तु** शब्दस्याकाशगुणत्वात् तद्ग्राहकस्य श्रोत्रस्याकाशात्मकत्वमिति साधयन्ति । **तत्** तस्य गुणत्वासिद्धेरयुक्तम् । मनस्तु सुखाद्यपरोक्षज्ञानसाधनेन्द्रियत्वेन कल्प्यते । तस्य च विभुत्वं साधयिष्यते । तथापि शरीरावच्छिन्नस्यैव तस्येन्द्रियत्वमिति तत्प्रदेश एव कार्याणि करोति। रूपादिज्ञानेष्वपि तच्चक्षुरादिपरतन्त्रं प्रवर्तत एव, अनुमानादिष्वपि लिङ्गादिसहायमिति स्थितिः । अत्र चक्षुःश्रोत्रयोः प्राप्यकारित्वे विवादोऽस्तीति तयोरपि बहिरिन्द्रियत्वात् त्वगादिवत् प्राप्यकारित्वं साधनीयम् । ततश्च चक्षुषः पृथुतरपृथिवीधरादिदर्शनात् पृथ्वग्रत्वमपि तेजःस्वभावसिद्धमाश्रयणीयम् । तथोन्मीलनक्षण एव दूरतरशनैश्चरादिदर्शनाद् व्याप्यावस्थितेन बाह्यतेजसा निर्गमनसमय एवैकीभावः कल्पनीयः । न च बाह्यतेजसः सकलव्यापित्वात् केरलेभ्योऽपि गङ्गादर्शनप्रसङ्गः । अदृष्टोपगृहीतेनैवालोकभागे[3]नैकीभावात् । **तार्किकास्तु** तदिदं दूरदर्शनं वेगातिशयात् साधयन्ति । तदनन्त-

---

१. 'पारिशेष्यादा' ख. पाठः. २. 'कादयस्तु' ख. पाठः. ३. 'गे(नः)नै' ख. पाठः

योजनान्तरितेष्वपि शनैश्चरादिषु झटितिदर्शनं वेगमात्रादसम्भाव्यमित्युपेक्षितमस्माभिः । एतानि च चक्षुरादीन्यनुद्भूतरूपस्पर्शत्वात् प्रत्यक्षेण न गृह्यन्त इति सिद्धानीन्द्रियाणि । सन्निकर्षस्तु द्विविधः संयोगः संयुक्ततादात्म्यं चेति । तत्र पृथिव्यप्तेजसां चक्षुस्त्वगिन्द्रियाभ्यां संयोगाद् ग्रहणम्, वायोस्त्वक्संयोगाद्[1], दिङ्नभस्तमसां दृक्संयोगात्[2], शब्दस्य श्रोत्रसंयोगाद्, आत्मनो मनःसंयोगात् । अत्र विभुनोरप्यात्ममनसोरजन्यसंयोगसाधनात्[3] संयोगः । कालस्य[4] तु युगपदादिप्रत्ययस्य कालविषयत्वेन्द्रियजन्यत्वयोर्वक्ष्यमाणत्वात् तस्य च सर्वेन्द्रियजन्यत्वात् सर्वैरपीन्द्रियैः संयोगाद् ग्रहणम् । यदा तु चक्षुरादिसंयुक्तेषु पूर्वोक्तेषु पृथिव्यादिषु तदात्मभूतानां जातिगुणकर्मणां ग्रहणं, तदा संयुक्ततादात्म्यं सन्निकर्षः । तदुक्तं—

"रूपादीनां तु संयुक्तद्रव्यतादात्म्यमेव नः ।
प्रतीतिकारणं तस्मान्न सम्बन्धान्तरस्पृहा ॥"

इति । यदा तु जातिगुणकर्मगतानां सत्तारूपत्वकर्मत्वादीनां ग्रहणं, तदा तेषामपि परम्परया तादात्म्यसंभवात् संयुक्ततादात्म्यमेव सन्निकर्ष इति मन्यामहे । यद्वा यथा परे रूपत्वादिग्रहणाय संयुक्तसमवेतसमवायमाश्रयन्ते, तथास्माकमपि संयुक्ततदात्मतादात्म्यं नाम तृतीयः सन्निकर्षोऽस्तु । का हानिः ।

---

१. 'द् । न' ख. पाठः. २. 'सोर्द' ख. पाठः. ३. 'पि शब्दम?' ख. पाठः. ४. 'दिक्कालयोस्तु सकलेन्द्रियसंयोगाद् ग्रहणं, तौ खल्वर्थान्तरपरतन्त्रतया गृह्यमाणौ सकलेन्द्रियैरपि गृह्येते इति स्थितिः । यदा' ख. पाठः.

जातिगुणकर्मणां च स्वाश्रयैस्तादात्म्यमेव सम्बन्ध इति पश्चात् साधयिष्यते । तस्माद् द्वेधा त्रेधा वा सन्निकर्षः । तार्किकाः पुनस्तादात्म्यस्थाने समवायमभिषिञ्चन्तोऽन्यथा सन्निकर्षमाहुः—संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणविशेष्यभावश्चेति षोढा सन्निकर्षः । तत्र चक्षुरादिभिः संयोगाद् द्रव्याणां ग्रहणम्। चक्षुरादिसंयुक्ते द्रव्ये समवायाद् गुणादीनां ग्रहणम् । संयुक्ते द्रव्ये समवेतेषु गुणादिषु समवायाद् गुणत्वादीनां ग्रहणम् । शब्दस्य चाकाशगुणत्वादाकाशात्मकेन श्रोत्रेण समवायाद् ग्रहणम्। शब्दत्वादीनां तु श्रोत्रसमवेते शब्दे समवायाद् ग्रहणम्। अभावस्य तु भावधर्मभूतयोः संयोगसमवाययोरभावात् संयुक्तभूतलादिविशेषणविशेष्यरूपसन्निकर्षेण ग्रहणम्। तथैव समवायस्याप्यद्रव्यत्वेन संयोगाभावात् समवायान्तराश्रयणेऽनवस्थाप्रसङ्गाद् विशेषणविशेष्यभाव एव सन्निकर्ष इति ।

**तत्राद्यं त्रितयं तावन्नाममात्रेण भिद्यते ।**
**समवायादयस्त्वन्ये सन्निकर्षा निराश्रयाः ॥ ८ ॥**

शब्दस्य हि श्रोत्रगुणत्वाभावात् समवायाख्यः समवेतसमवायाख्यश्च सन्निकर्षो निरवकाशः । अभावस्य च प्रत्यक्षत्वाभावात् समवायस्य च शशशृङ्गायमाणत्वाद् विशेषणविशेष्यभावसन्निकर्षोऽपि हेयः । किञ्च चक्षुःसंयुक्तेनार्थेनाभावसमवाययोर्विशेषणविशेष्यभावो न सम्भवति । दण्डी पुरुष इत्यादौ सम्बन्धान्तरपूर्वकस्यैव विशेषणविशेष्यभावस्य दर्शनाद्, अभावसमवाययोश्चार्थेन सम्बन्धान्तराभावादिति । **प्राभाक-**

रास्तु संयोगः, संयुक्तसमवायः, समवायः इति त्रेधा सन्निकर्ष-माहुः । तन्मते रूपत्वादीनामभावात् संयुक्तसमवेतसमवायो नाश्रयणीयः, शब्दत्वस्याभावात् समवेतसमवायोऽपि । अभावस्य चाभावात् समवायस्य च प्रत्यक्षत्वाभावाद् विशेषणविशेष्यभावोऽपि नाश्रयणीय इति । तदपि मतं रूपत्वादीनां साधनात् तार्किकैरेव निराकृतम् । तस्मादुक्तप्रकार एव सन्निकर्ष इति ।

तच्चेन्द्रियसन्निकर्षजं ज्ञानं द्विविधं निर्विकल्पकं सविकल्पकं चेति । तत्रेन्द्रियसन्निकर्षानन्तरमेव द्रव्यादिस्वरूपमात्रावगाहि शब्दानुगमशून्यं यत् सम्मुग्धज्ञानं जायते, तद् विशिष्टकल्पनाभावाद् निर्विकल्पकमित्युच्यते । यत्तु तदनन्तरं शब्दस्मरणसहकृतं जात्यादिविशिष्टवस्तुविषयं रक्तोऽयं घटोऽयमित्यादिव्यक्तविज्ञानं, तत् सविकल्पकम् । तत्र शाब्दिका निर्विकल्पकं नास्तीत्याहुः । तदुक्तं—"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।" (वाक्यप. का. १. श्लो. १२४) इति । तदयुक्तम् । पूर्वमर्थदर्शनाभावे शब्दस्मरणस्य हेत्वभावप्रसङ्गात् । सौगतास्तु निर्विकल्पकमेव प्रत्यक्षमाश्रित्य सविकल्पकस्य प्रमाणत्वं प्रत्यक्षत्वं च नास्तीत्याहुः । तदप्ययुक्तम् । तस्य प्रत्यक्षतया लोकसिद्धस्य निषेधे लोकविरोधात् । तदुक्तं—

"चन्द्रशब्दाभिधेयत्वं शशिनो यो निषेधति ।
स एव सविकल्पस्य प्रत्यक्षत्वं निवारयेत् ॥"

---

१. 'क्तो घ' ख. पाठः.

इति । किञ्च सविकल्पकानन्तरमेवार्थक्रियादर्शनात् तस्यार्थक्रियाकारित्वलक्षणं प्रमाणत्वं दुर्निवारम् । नन्वर्थक्रियाकारित्वमस्यार्थतोऽतिविप्रकर्षाभावाद् दैवागतमेव । न स्वाभाविकम् । वस्तुतस्त्वयं विकल्पो मिथ्या, अवस्तुभूतसामान्यादिविषयत्वादिति चेत् । मैवम् । अनुमानविकल्पस्याप्यप्रामाण्यप्रसङ्गात् सामान्यादेर्वस्तुत्वस्य साधयिष्यमाणत्वाच्च । अतः प्रमाणमेव सविकल्पकम् । ननु[1] तथापि कथमस्य प्रत्यक्षशब्दवाच्यत्वं, निर्विकल्पकव्यवधानेन साक्षादक्षजत्वाभावात्, परम्पराक्षजस्य प्रत्यक्षत्वेऽनुमानादीनामपि प्रत्यक्षत्वप्रसङ्गात् । मैवम् । पङ्कजादिष्विव योगरूढिस्वीकारेणानुमानादिषु प्रत्यक्षशब्दस्याप्रवृत्तेः । अत्र गुरुराह — न पङ्कजादिषु रूढिरस्ति, अवयवशक्त्यैव पद्मे वृत्त्युपपत्तेः । कुमुदादिष्वप्रवृत्तिस्तु[2] तेष्वप्रयोगादेव भविष्यतीति । तदयुक्तम् । पङ्कजशब्दस्य पद्मे वृत्तौ का सामग्रीति चिन्तायां योगमात्रस्य कुमुदादिष्वपि सद्भावेन व्यभिचाराद् रूढिरपि सामग्रीत्वेन कल्प्या । योगश्च प्रतीतो न हातुं शक्य इत्युभयसिद्धेः । तस्माद् योगरूढिशक्त्या निर्विकल्पकसविकल्पकयोरेव प्रत्यक्ष[3]शब्दवाच्यत्वं नाक्षापेक्षाणामप्यनुमानादीनामिति सिद्धम् । सविकल्पकेन च द्रव्यजातिगुणकर्मनामाभिः पञ्चधा विकल्पो भवति । यथा वेणुमानयं, गोपोऽयं, श्यामोऽयं, गायत्ययं, गोविन्दोऽयमिति[4] । प्रत्यभिज्ञाप्रत्यक्षमपि षष्ठो

---

१. 'ने सा' ख. पाठः. २. 'ष्वप्र' ख. पाठः. ३. 'क्षवा' ख. पाठः.
४. 'ति । स एवायमिति प्र' ख. पाठः.

विकल्प इति केचित् । तन्न । नामकल्पनायामन्तर्भावात् । नाम्ना हि पूर्व[1]मनुभूतरूपे स्मारिते तद्रूपविशिष्टतयार्थस्य कल्पना नामकल्पनेत्युच्यते । तेन गोविन्दोऽयमित्यस्यायमर्थः—योऽसावस्माभिर्गोविन्दशब्दवाच्यतया पूर्वं गृहीतः, स एवायमिति । यदा तु शब्दवाच्यत्वमतन्त्रीकृत्य पूर्वापररूपयोरैक्यावगम एव तात्पर्यं, तदा स एवायमिति प्रत्यभिज्ञा स्पष्टा भवति । सा च प्रत्यभिज्ञा संस्कारसहितेनेन्द्रियेणैकज्ञानत्वेन जन्यते । तया च स इति अयमिति च द्वे भाने जन्येते । तत्र स इति भानजननशक्तिः संस्कारकृता । अयमिति भानजननशक्तिरिन्द्रियकृता इत्यलमनेन । इह च प्रत्यक्षज्ञानेषु विवक्षाभेदेनेन्द्रियस्य तत्सन्निकर्षज्ञानस्य वा करणत्वं भवति । अतः सिद्ध[2]मिन्द्रियसान्निकर्षजं प्रमाणं प्रत्यक्षमिति । गुरुस्त्वाह — साक्षात्प्रतीतिः प्रत्यक्षम् । त(द्) मेयमातृप्रमास्विति त्रिपुटं भवतीति । तत्र किमिदं साक्षात्त्वं नाम । ननु साक्षाद्धीः स्वरूपधीः । अक्षाद्धि स्वे[3]नैव रूपेण भानम् । लिङ्गादिभ्यस्तु[4] परसम्बन्धिरूपेणैवाग्न्यादीनां भानादसाक्षात्त्वमिति चेत्, तर्हि नामादिपरसम्बन्धिरूपेण[5] भानात् सविकल्पकस्यासाक्षात्त्वं स्यात् । अथ तत्र परसम्बान्धिरूपभाने सत्यपि स्वरूपधीरप्यस्तीत्युच्यते, तर्ह्यनुमानादिष्वपि तथाभावात् साक्षात्त्वं स्यात् । आत्मस्वात्मनोस्तु सर्वज्ञानेषु प्रत्यक्षत्वकथनं निराकरिष्याम इत्यास्तामेतत् । कल्प-

---

१. 'र्वानु' ख. पाठः. २. 'द्धमिदामि' ख. पाठः. ३. 'न रू' ख. पाठः. ४. 'स्वप' क. पाठः. ५. 'णैव भा' क. पाठः.

नापोढमभ्रान्तं प्रत्यक्षमिति बौद्धाः। कल्पनापोढपदेन विकल्पानां निरासः, अभ्रान्तपदेन निर्विकल्पकेऽपि भ्रमत्वेनाभिमतानां केशोण्डुकादिज्ञानानामिति। तदपि सविकल्पकस्य प्रत्यक्षत्वसाधनादव्याप्तमिति। यत् पुनर्भूतभविष्यदादिविषयं योगिज्ञानमीश्वरज्ञानं चेन्द्रियसन्निकर्षजत्वाभावेऽप्यपरोक्षमस्तीति तत्सङ्ग्रहणायापरोक्षप्रमाव्याप्तं प्रत्यक्षमिति लक्षयितव्यमिति तार्किकैरुक्तम्। तदप्ययुक्तम्। प्रत्यक्षस्य विद्यमानोपलम्भ[1]त्वनियमाद् भूतादीनां प्रत्यक्षत्वस्यानुपपत्तेः। तस्मादस्मदुक्तं प्रत्यक्षलक्षणं रमणीयम्।

**इन्द्रियव्यतिरिक्तानि द्रव्याण्येषां च जातयः।**
**प्रायश्च गुणकर्माणि प्रत्यक्षाणीति वक्ष्यते॥ ९॥**

इति मानमेयोदये

प्रमाणपरिच्छेदे प्रत्यक्षपरीक्षा।

---

अथानुमानपरीक्षा।

**व्याप्यदर्शनादसन्निकृष्टार्थज्ञानमनुमानम्।** यथा पर्वते धूमवत्त्वद[2]र्शनादग्निमत्त्वज्ञानम्। किमत्र धूमस्य व्याप्यत्वम्। उच्यते। यद् यतो बहिर्न वर्तते, तत् तस्य व्याप्यम्। धूमश्च दहनादन्यत्र न वर्तत इति धूमस्य व्याप्यत्वम्। दहनस्तु धूमादन्यत्रापि वर्ततेऽङ्गारावस्थायामिति तस्य व्यापकत्वमेव। तदियम-

---

१. 'म्भनत्व' क. पाठः. २. 'ज्ञाना' क. पाठः.

ग्निधूमयोरन्योन्यव्याप्त्यभावाद् विषमव्याप्तिः। क्वचित् तु समव्याप्तिरप्यस्ति यथा कृतकत्वानित्यत्वयोः। तत्र खलु कृतकानां सर्वेषामनित्यत्वमस्ति। अनित्यानां सर्वेषां[1] कृतकत्वमप्यस्तीति समव्याप्तिरेव। का पुनरियं व्याप्तिः। उच्यते। स्वाभाविकः सम्बन्धो व्याप्तिः। स्वाभाविकत्वं चोपाधिराहित्यम्। उपाधिरिति च साध्यस्य साक्षात्प्रयोजकं हेत्वन्तरमुच्यते। तत्सद्भावे हि तद्दत्तमेव साध्यसम्बन्धं क्वचिल्लभमानः प्रस्तुतो हेतुः स्वयमेवासाधको भवति। तद् यथा 'अग्नीषोमीयहिंसा अधर्मः, हिंसात्वाद्, बाह्यहिंसादिवदि'त्यवैदिकानां[2] साङ्ख्यानां च प्रयोगः। तत्र निषिद्धत्वमुपाधिः। तदेव ह्यधर्मत्वस्य साक्षात्प्रयोजकम्। बाह्यहिंसानामपि च निषिद्धत्वकृतमेवाधर्मत्वमिति क्रतुहिंसायां[3] निषिद्धत्वाभावे हिंसात्वमात्रेणाधर्मत्वं न सिध्यतीति। साधनाव्यापकत्वे सति साध्यसमव्याप्त उपाधिरिति तस्य लक्षणम्। निषिद्धत्वं हि साधनभूतहिंसात्वदेशे सर्वत्र न वर्तते, क्रतुहिंसायां निषिद्धत्वाभावात्। साध्यभूतेन चाधर्मत्वेन निषिद्धत्वस्य समव्याप्तिरस्ति, निषिद्धानां सर्वेषामप्यधर्मत्वाद्, अधर्मभूतानां च सर्वेषां निषिद्धत्वादिति। तत्सामग्रीकत्वं[4] महानसत्वं पर्वतान्यत्वं चाग्न्यनुमितावुपाधिर्मा भूदिति तद्विशेषणत्रितयम्। अत्र यदि साध्यसमव्याप्त उपाधिरित्येवोच्येत, तर्हि धूमवत्त्वेनाग्निमत्त्वे साध्यमानेऽग्निसामग्रीकत्वमुपाधिः[5] स्यात्। अस्ति हि

---

१. 'षामानित्यत्वमस्ति कृ' क. पाठः. २. 'नां प्र' क. पाठः. ३. 'यां' ख. पाठः. ४. 'मत्त्वं' ख. पाठः. ५. 'मत्त्व' ख. पाठः.

तस्याग्निना समव्याप्तिः । अतस्तन्निवृत्त्यर्थमुक्तं साधनाव्यापक इति । अग्निसामग्री हि साधनभूतस्य धूमस्य व्यापिकैव, धूमे सति सर्वत्राग्निसामग्र्या अवश्यंभावात् । यदि तु साधनाव्यापक इत्येवोच्येत, तर्हि तत्रैव महानसत्वमुपाधिः स्यात् । न हि धूमे सति सर्वत्र महानसत्वमस्तीति साधनाव्यापकत्वस्य भावात् । अतस्तन्निवृत्त्यर्थं साध्यव्यापकत्वमाश्रयणीयम् । न हि महानसत्वस्याग्निव्यापकत्वमस्ति, मठादिष्वग्निसद्भावेऽपि तदभावात् । अथ यदि साधनाव्यापकत्वे सति साध्यव्यापक[1] उपाधिरित्येवोच्येत, तथापि पर्वतेतरत्वमुपाधिः स्यात् । पर्वतेतरत्वं विनापि पर्वते धूमस्य दर्शनेन साधनाव्यापकत्वात् । अग्निमत्त्वेन पूर्वमवधारितानां सर्वेषामपि पर्वतेतरत्वेन साध्यव्यापकत्वस्यापि सद्भावात् । अतस्तन्निवृत्त्यर्थं समशब्दः । न हि तस्याग्निना समव्याप्तिरस्ति, पर्वतेतरेषां सर्वेषामग्निमत्त्वाभावादिति । अन्यत्र वा विशेषणकृत्यं दर्शयितव्यम् । यदि साध्यसमव्याप्त एवोपाधिः स्यात्, तर्हि 'शब्दोऽनित्यः जन्यत्वाद् घटवदि'त्यत्र सकर्तृकत्वमुपाधिः स्याद्, अनित्यत्वसकर्तृकत्वयोः समव्याप्तिसद्भावात् । अतस्तन्निवृत्त्यर्थमुक्तं साधनाव्यापक इति । सकर्तृकत्वं हि साधनाभिमतस्य जन्यत्वस्यापि व्यापकमिति साधनव्यापकत्वादनुपाधित्वम् । साधनाव्यापकस्यैवोपाधित्वे तु तत्रैव सावयवत्वं घटत्वमित्यादिरुपाधिः किं न स्यात् । न हि जन्यानामपि गुणादीनां सावयवत्वं घटत्वं वास्तीति साधनाव्यापकत्वस्य सद्भा-

---

१. 'अप्यव' ख. पाठः. २. 'क इत्ये' ख. पाठः.

वात् । अतः साध्यव्यापकत्वमप्याश्रयणीयम् । सावयवत्वघट-त्वादीनां गुणक्रियादावनित्यत्वव्यापकत्वाभावात् । तथापि शब्दे-तरत्वस्यानित्यत्वव्यापकत्वादुपाधित्वं स्यादिति तन्निवृत्त्यर्थं सम-शब्द इति । [1]इदं त्वनुमानं व्याप्तिप्रदर्शनमात्रपरमेव । न स्व-सिद्धान्तपरमिति वेदितव्यम् । ननु पर्वतेतरत्वाभावेऽप्यग्निरस्ति चेदयं दोषः स्यादिति तर्कस्यासम्भवेन पर्वतेतरत्वस्याग्निव्याप-कत्वमेव नास्ति । सत्यम् । तथापि तस्य व्यापकत्वेनावगमाद-क्लेशेन तन्निरासार्थं समशब्दश्चिदानन्दादिभिराश्रितः ।

समव्याप्तिमतामेव सर्वथापि ह्युपाधिता ।
इति विस्पष्टतार्थं च समशब्दो न दूषणम्[2] ॥ १० ॥

अस्य चोपाधेः [3]साध्यव्यापकत्वाद्यनिश्चये शङ्कितोपाधि-त्वम् । यथा—मैत्रीतनयत्वेनाष्टमगर्भस्य श्यामत्वे साध्ये शा-[4]काद्याहारपरिणाम उपाधिः । अष्टमपुत्रे च तस्य नास्तित्वे स्थित एव तस्य साधनाव्यापकत्वं भवेत् । स च तत्रापि शङ्क्यत ए-वेत्यनिश्चितमेव साधनाव्यापकत्वम् । अतः शङ्कितोपाधिरसा-विति । क्वचिच्च साधनस्य विशेष एव प्रयोजको भवति । यथा 'अयं द्विजो वेदज्ञो भविष्यति द्विजत्वाद्' इत्यत्र बुद्ध्या[5]दिमद्द्वि-जत्वमुपाधिरिति ।

तस्मादुपाधिमिच्छद्भिः पक्षभूमिमनाप्नुवन् ।
सपक्षान् व्याप्नुवन् धर्मो मृग्यतामिति सङ्ग्रहः ॥ ११ ॥

---

१. इत आरभ्य वेदितव्यमित्यन्तं ख. पुस्तके न दृश्यते. २. 'मिति । अ' ख. पाठः. ३. 'साधनाव्या' ख. पाठः. ४. 'कादिप' ख. पाठः. ५. 'द्विम' ख. पाठः.

सोऽयमीदृश उपाधिर्धूमस्याग्निसम्बन्धे नास्तीति स्वाभाविक एवासौ सम्बन्धः। स पुनः स्वाभाविकः सम्बन्धः कथं गृह्यत इति चेत्। उच्यते। आदौ तावन्महानसादौ भूयो भूयो धूमस्याग्निसम्बन्धं पश्यन् क्रमेण च महानसत्वगृहत्वग्रामत्वादीनुपाधित्वेनाशङ्क्य व्यभिचारदर्शनेन निरस्यन्नन्यानप्युपाधीन् निपुणं निरूप्य योग्यानुपलम्भेन निराकुर्वन् भूयोदर्शनोपाध्यभावग्रहणजनितसंस्कारसहितेनेन्द्रियेण सोऽयमेकरूप एव धूमाग्न्योः स्वाभाविकः सम्बन्ध इति निश्चिनोतीति। **प्राभाकरास्तु**— धूमस्याग्निसम्बन्धः सकृद्दर्शनादेवावगम्यत इति सकृद्दर्शनगम्यैव व्याप्तिः। उपाधिशङ्कानिरासार्थमेव तु भूयोदर्शनमर्थ्यत इत्याहुः। **तदयुक्तम्**। अनुमानाङ्गभूत एव सम्बन्धो व्याप्तिरित्युच्यते। निरुपाधिकत्वविशिष्टस्यैव च सम्बन्धस्यानुमानाङ्गत्वं, न धूमाग्निसम्बन्धमात्रस्य। निरुपाधिकत्वावधारणं च भूयोदर्शनसाध्यमेवेति तैरप्युक्तम्। अतो भूयोदर्शनगम्यैव निरुपाधिकसम्बन्धरूपा व्याप्तिः। ननु न भूयोदर्शनमात्रेण निरुपाधिकत्वावधारणं, तस्य मैत्रीतनयत्वश्यामत्वयोरपि भावात्। सत्यम्। अत एवाह चिदानन्दः— न केवलं भूयोभिर्दर्शनैस्तादृशमवधारणं सिध्यतीति प्रमाणोत्पत्त्यनुगुणस्तर्कोऽपि तत्र सहकारीति। कः पुनस्तर्कः। उच्यते। प्रमाणेन साध्यमानस्यार्थस्यान्यथात्वशङ्कायां तन्निरासार्थमन्यथात्वे दोषकथनं तर्कः। अत एवानिष्टप्रसङ्गस्तर्क इति तार्किकाः। अयमेव च विपक्षे बाधक

१. 'लैर्भू' ख. पाठः.

इति चोच्यते। यथा 'यद्यत्राग्निर्न स्यात् तर्हि धूमोऽपि न स्याद्' इत्यादि। अस्य च तर्कस्य पञ्चाङ्गानि। यदाहुः—

"व्याप्तिस्तर्काप्रतिहतिरवसानं विपर्यये।
अनिष्टाननुकूलत्वे इति तर्काङ्गपञ्चकम्॥"

इति। अत्र साध्यवैपरीत्यमन्यभावादिकमारोप्य तेन लिङ्गभूतेन धूमाभावाद्यनिष्टस्य प्रसञ्जनं हि तर्केण क्रियते। तत्र प्रसञ्जकस्याहार्यलिङ्गस्य प्रसञ्जनीयेन व्याप्तिरेष्टव्या। तथा प्रतितर्कैरप्रतिघातः[1]। प्रसञ्जनीयविपर्यये पर्यवसानम्, एवं चेदेवं स्याद्, नचैवमिति। प्रसञ्जनीयस्य चानिष्टत्वं प्रसिद्धम्। अननुकूलत्वं प्रतिपक्षासाधकत्वमिति। अङ्गवैकल्ये च तर्काभासत्वं भवति। व्याप्त्यभावे यथा 'यद्यग्निमत्त्वं न स्यात् तर्हि पर्वतत्वमपि न स्यादि'ति। तर्कप्रतिहतौ यथा 'यदीयं मेघोन्नतिर्वृष्टिमती न स्यात् तर्हि निबिडापि न स्यादि'ति तर्कस्य 'यदीयं वृष्टिमती स्यात् तर्हि वातोद्रेकवती न स्यादि'ति तर्केण प्रतिहतिः। विपर्ययपर्यवसानाभावे यथा 'शब्दोऽनित्यः कृतकत्वाद्' इति मीमांसकं प्रति[2] प्रयोगे 'यद्यनित्यो न स्यात् तर्हि कृतकोऽपि न स्यादि'ति तर्कः। तत्र कृतकश्चायमिति पर्यवसाययितुं न शक्यते, मीमांसकपक्षे[3] शब्दस्य कृतकत्वाभावात्। इष्टत्वमप्यत्रैव, कृतकत्वाभावस्य तं प्रतीष्टत्वात्। अनुकूलत्वे यथा 'अनुमेयं कर्म कर्मत्वाद् आदित्यकर्मवद्' इत्यत्रान्यथा कर्मैव न सिध्येदिति

---

१. 'ती' ख. पाठः. २. 'ति यो' क. पाठः. ३. 'क्षे कृ' क. पाठः.

तर्कः । स च प्रत्यक्षवादिनामप्यनुकूलः । तैरपि प्रत्यक्षत्वं साधयित्वान्यथा कर्मैव न स्यादिति वक्तुं शक्यत्वादिति । आत्माश्रयादयश्च दोषास्तर्क एवान्तर्भूताः अनिष्टप्रसङ्गरूपत्वात् ।

**स्वेनैव स्वस्य सिद्धिर्या तदात्माश्रयदूषणम् ।**
**अनेनान्यस्ततश्चायमित्यन्योन्याश्रयं भवेत् ॥ १२ ॥**
**अनेनान्यस्ततश्चान्यस्ततोऽसाविति चक्रकम् ।**
**अतीतास्पृष्टमन्यान्यग्रहणं त्वनवस्थितिः ॥ १३ ॥**
**गौरवं लाघवं चेति तर्कौ सार्वत्रिकावुभौ ।**
**गौरवं कल्पनाधिक्यं लाघवं स्वल्पकल्पना ॥ १४ ॥**
**दोषप्रसङ्गरूपत्वं गौरवस्यैव विद्यते ।**
**साध्ये गुणकथाद्वारा लाघवस्य प्रसङ्गता ॥ १५ ॥**
**साध्याभावानुवादेन दोषः साध्ये गुणोऽपि वा ।**
**यत्रानुकूलतर्कोऽसौ साध्यसिद्धावनुग्रहात् ॥ १६ ॥**
**साध्यस्यैवानुवादेन यदनिष्टप्रसञ्जनम् ।**
**स तर्कः प्रातिकूलः स्यात् साध्यसिद्धिनिरोधनात् ॥१७॥**

इति । स चायं तर्को व्याप्तिग्रहणवेलायामनुमानोत्थानसमये वा व्यभिचारशङ्कां निरस्य व्याप्तिं शोधयन्ननुमानस्यानुग्राहको भवति । ननु यद्यग्निर्न स्यात् तर्हि धूमोऽपि न स्यादित्यनेनैव तर्केण व्यभिचारशङ्का न निवर्तते, अग्न्यभावेऽपि धूमः किं न स्यादिति शङ्कायाः पुनरप्यनपायात् । सत्यम् । अत एव शङ्काव्याघातपर्यन्तं तर्कमार्गेणैव गन्तव्यमिति तार्किकाः । इह च यद्यग्न्यभावेऽपि धूमः स्यात्, तर्हि कारणं विनापि कार्यजनन-

मङ्गीकृतं स्यादिति तर्के प्रयुक्ते तदपि किं न स्यादिति शङ्का न लोकविदामङ्कुरति । ननु तथापि धूमस्याग्निः कारणमिति कुतो[1] निर्णीयत[2] इति शङ्का नापैति । नैवम् । यद्यग्निः कारणं न स्यात् तर्हि कारणान्तरानुपलम्भेन धूमस्य निष्कारणत्वमेव प्रसजेदिति तर्के सति समस्तविजयात् । तदेवं तर्के व्यभिचार-शङ्कायां सर्वतो निरुद्धायामुपाध्यन्तरशङ्काकथापि विधूतैव । ततश्चादृश्योपाधिशङ्का सर्वथा दुर्वारेति चार्वाकदुर्वादोऽपि निर्वा-सित इति ।

अथवोपाधिशङ्कैव तर्कैर्निष्कास्यते स्फुटम् ।
उपाधिर्मानयोग्यो वा तदयोग्योऽथवा भवेत् ॥ १८ ॥
अयोग्यश्चेन्न शङ्क्येत योग्यश्चेत् किं न दृश्यते ।
अनुमानादिगम्यश्चेल्लिङ्गादिः किं न दृश्यते ॥ १९ ॥

इत्यादि । ततश्च—

शङ्काव्याघातपर्यन्तमेवं सर्वानुमास्वपि ।
तर्कजालं प्रयोक्तव्यमत्यल्पं चेदमुच्यते ॥ २० ॥
यतः प्रत्यक्षशाब्दादिप्रमाणान्यखिलान्यपि ।
तर्कं विना न जीवन्ति प्रत्यक्षे तावदीक्ष्यताम् ॥ २१ ॥

अयं घट इति प्रत्यक्षं हि सुगतकथितपरमाणुगोचरता-पराणोदिना तर्केणानुगृहीतमेवावयविगोचरं भवति । यदि पर-माणुविषयता स्यात्, तर्हि एकत्वेन महत्त्वेन चावभासो न

---

१. 'को नि' ख. पाठः. २. 'र्णय इ' ख. पाठः.

स्यादिति तर्कः । तथा अयं गौरिति प्रत्यक्षमपि यद्यत्यन्ताभिन्नविषयं स्यात् तर्हीदंगोत्वे इति प्रतीतिः स्यादिति तर्केणानुगृहीतमेवाभेदस्यापि ग्राहकं भवतीत्यादि । एवं शा[1]ब्देऽपि ब्रूमः । अध्ययनविधिरेव तावद् यदि स्वर्गफलः स्यात् तर्हि दृष्टार्थत्वे सम्भवत्यदृष्टग्रहणाद् गौरवं स्यादिति तर्कानुग्रहेणार्थज्ञानफल[2]बोधको भवति । यद्यर्थज्ञानफलः स्यात् तर्हि विधिवैयर्थ्यं स्यादिति प्रतिकूलतर्कश्च तत्र[3] तत्र निरसनीयः । [4]तथा—

"उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः ।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥" (मनु. अ. २. श्लो. १४०)

इति स्मृतिः । यद्यध्यापनविधिः स्यात् तर्हि 'तु यो द्विजस्तमाचार्यं प्रचक्षत' इत्यंशेनैकवाक्यता न स्यादिति तर्केणाचार्यलक्षणपरता निश्चीयतेऽस्याः स्मृतेः । तथा—'अक्ताः शर्करा उपदधाती'त्यत्र यदि घृतेनाञ्जनं न स्यात्, तर्हि 'तेजो वै घृतमि'ति वाक्यशेषो विरुध्यत इति तर्काद् घृताञ्जनपरता साध्यत इति ।

**एवं सर्वत्र तर्कौघैरर्थाभासनिरासतः ।**
**वाक्यार्थस्थापनी सर्वा मीमांसा तर्करूपिणी ॥ २२ ॥**

उक्तं च मनुना—

"आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥" (अ. १२. श्लो. १०६)

---

१. 'श' क. पाठः. २. 'लफलबो' ख. पाठः. ३. 'त्र नि' क. पाठः.
४. इत आरभ्य 'स्मृतेः' इत्यन्तं ख. पुस्तके न दृश्यते ।

इति । एवमुपमानार्थापत्त्यभावेष्वपि तत्र तत्र तर्कापेक्षणमूहितव्यम् ।

तस्मात् सर्वप्रमाणानां तर्कोऽनुग्राहकः स्थितः ।
साध्ये विपर्ययाशङ्काविच्छेदस्तदनुग्रहः ॥ २३ ॥
अस्याविज्ञाततत्त्वोऽर्थः सन्दिग्धो विषयो मतः ।
हेतुरारोपितं लिङ्गं फलं तत्त्वार्थनिर्णयः ॥ २४ ॥
तदेवं तत्त्वसिद्ध्यर्थमन्यथानिष्टवर्णने ।
प्रसरत्यसदा[1]रोपतत्साधनपरम्परा ॥ २५ ॥
तत्र चारोपवादेऽपि सिद्धान्तत्वभ्रमः क्वचित् ।
वेदश्चेदीश्वराधीनस्तर्हीशोऽपि न सिध्यति ॥ २६ ॥
इत्युक्तावीश्वराभावः सिद्धान्त इति मन्यते ।
असम्भाव्यस्य चारोपादसन्तोषः क्वचिद् भवेत् ॥ २७ ॥
अपकर्षाप्रतिष्ठश्चेत् परमाणुस्तथासति ।
अनन्तावयवारम्भान्मेरुसर्षपयोर्द्वयोः ॥ २८ ॥
स्यात् तुल्यपरिमाण(त्व)मित्याद्युक्तिर्यथा भवेत् ।
तत्र चास्य प्रमाणस्य तर्कोऽयं तस्य सिद्धये ॥ २९ ॥
अन्यदुक्तमिति व्यक्तं विविञ्चन् नैव मुह्यति ।
तस्मात् तर्कप्रकारोऽयं प्रसङ्गप्रापितोऽपि सन् ॥ ३० ॥
अत्यन्तमुपकारीति विस्तरात् प्रस्तुतो मया ॥ ३०½ ॥[2]

इति । तदेवं तर्कसहायेन भूयोदर्शनेनैव निरुपाधिकसम्बन्धोऽवधार्यते ।

---

१. 'ला' क. पाठः.　२. 'इत आरभ्य सार्धं पद्यं क. पुस्तके न दृश्यते ।

**भूयोदर्शनतः शक्या दृश्योपाधिनिराक्रिया ।**
**अदृश्योपाधिशङ्का तु तर्कैरेव निरस्यते ॥ ३१½ ॥**

इति विभागः । अतः सिद्धा व्याप्तिः । **बौद्धास्तु** तादात्म्यतदुत्पत्तिभ्यामेव व्याप्तिसिद्धिरित्याहुः । यथा — शिंशपात्वस्य वृक्षत्वेन व्याप्तौ तादात्म्यं, धूमस्याग्निना[1] व्याप्तौ तदुत्पत्तिरिति । **तन्न** । कृत्तिकोदयरोहिण्यासत्त्योर्व्याप्तौ तदुभयाभावात् । तस्माद् निरुपाधिकत्वावधारणादेव व्याप्तिसिद्धिः ।

**व्याप्तिर्नियमः प्रतिबन्धोऽव्यभिचारस्तथाविनाभावः ।**
**व्याप्यं पुनर्नियम्यं गमकं लिङ्गं च साधनं हेतुः ॥३२½॥**
**इत्युभयोः पर्याया इति तस्य तु दर्शनं त्रिविधम् ॥ ३३ ॥**

व्याप्तिग्रहणवेलायां धूमदर्शनं प्रथमम् । पर्वतोपान्तगतस्य धूमदर्शनं द्वितीयम् । ततश्च व्याप्तिस्मरणानन्तरं तादृशो धूमोऽत्रास्तीति यदनुसन्धानं, तत् तृतीयम् । तदत्र व्याप्यदर्शनमभिमतं, तदनन्तरमेव वह्निज्ञानस्योत्पत्तेरिति । असन्निकृष्टपदेन पुनः किमुच्यते । अपरिच्छिन्नमिति ब्रूमः । तदुक्तम्—

"असन्निकृष्टवाचा च द्वयमत्र जिहासितम् ।
ताद्रूप्येण परिच्छित्तिस्तद्विपर्ययतोऽपि वा ॥"

इति। पूर्वं सत्त्वेन परिच्छिन्ने ह्यग्न्यादौ पुनरनुमानमनुवादः स्याद्, असत्त्वेन परिच्छेदे च बाधितत्वेनाप्रामाण्यमेवेति तदुभयनिवर्तनार्थमसन्निकृष्टपदमिति । अत्र **चार्वाकाः**— अग्निविशेषस्यानुमेयत्वे व्याप्त्यसिद्धिः । अग्निसामान्यस्यैव धूमसामान्येन व्या-

---

१. 'ग्निन्या' ख. पाठः.

तेः । सामान्यस्यानुमेयत्वे तु तस्य पूर्वमेव परिच्छिन्नत्वात् सिद्धसाध्यत्वम् । तथाचासन्निकृष्टपदमप्ययुक्तम् । तदुक्तम्—

"अनुमाभङ्गपङ्केऽस्मिन् निमग्ना वादिदन्तिनः ।
विशेषेऽनुगमाभावः सामान्ये सिद्धसाध्यता ॥"

इति । अत्रोच्यते । न तावत् सामान्ययोरेव केवलयोर्व्याप्ति-[1] सिद्धिः । तथाहि[2] सति धूमत्वेन वह्नित्वं स्वतः सम्बद्धमिति व्याप्तिग्रहः स्यात् । तथाच वह्नित्वजातिसम्बन्धाद् धूमत्वमेव वह्निः स्यात् । अतो विशेषद्वारेणैव सामान्ययोर्व्याप्तिः सिध्यति । विशेषश्च तत्र तत्र विभिन्नत्वान्न नियतो निरूपयितुं शक्यत इत्यनियतविशेषालिङ्गितयोर्व्याप्तिरिति स्थितिः । ततश्च पर्वतवर्तितया दृष्टो धूमोऽनियतविशेषालिङ्गितमग्निं पर्वतेऽनुमापयति । इह च यद्यप्यनियतविशेषालिङ्गितमग्निसामान्यं व्याप्तिवेलायामेव गृहीतं, तदेव चानुमेयं, तथापीदानीं पर्वतेऽग्निरस्तीति देशकालविशेषस्याप्यनुमीयमानत्वात् तस्य च पूर्वमप्राप्तत्वात् सिद्धसाध्यत्वस्यानवकाश एव ।

**व्याप्तिश्च पक्षधर्मत्वमनुमाङ्गं द्वयं विदुः ।**
**व्याप्त्या ह्युक्तप्रकारेण वह्निसामान्यवेदनम् ॥ ३४ ॥**

**धूमस्य शैलनिष्ठत्वरूपा या पक्षधर्मता ।**
**तया पर्वतसम्बन्धो वह्नेरप्यवगम्यते ॥ ३५ ॥**

इति । गुरुस्त्वाह—धूमवतो देशस्य वह्निमत्त्वमप्यस्तीति व्याप्तिवेलायामेव गृहीतत्वाद् धूमवत्त्वमेव पर्वतस्येदानीमपूर्वं ग्रही-

१. 'प्तिः । त' ख. पाठः. २. 'थास' ख. पाठः.

तव्यम् । अग्निमत्त्वं तु तस्य पूर्वगृहीतमेवावगम्यत इति । **तद-युक्तम्।** धूमवत्त्वं तावत् पर्वतस्येदानीमेव गृह्यत इत्युक्तम् । अतः कथं धूमवत्त्वप्राप्तिं विनात्र वह्निमत्त्वप्राप्तिः पूर्वमासीदि-त्यविचारयतो[1] गुरोरयमुन्माद इति । अतः सिद्धमसन्निकृष्टज्ञा-नस्यानुमानत्वम् । अत्र च प्रमाणोक्तप्रकारेण प्राकट्यरूपानु-मितिकरणत्वादेव ज्ञानस्यानुमानत्वमुक्तम् । ज्ञानरूपानुमिति-करणत्वाच्च धूमादेरप्यनुमानत्वमस्त्येवेति । तच्चानुमानं त्रि-विधम् अन्वयव्यतिरेकि केवलान्वयि केवलव्यतिरेकि चेति । द्वेधा हि व्याप्तिः अन्वयव्याप्तिर्व्यतिरेकव्याप्तिश्चेति । तत्र साध-नस्य सद्भावे साध्यस्यापि सद्भावोऽन्वयव्याप्तिः । साध्यस्या-भावे साधनस्याप्यभावो व्यतिरेकव्याप्तिः । व्यतिरेके च व्या-प्यव्यापकभावोऽन्वयाद् विपरीतो भवति । अग्न्यभावो ह्यत्र व्याप्यः । धूमाभावश्च व्यापक इति ।

**अग्नेर्भावस्य भूयस्त्वात् तदभावोऽल्पतां व्रजेत् ।**
**धूमभावस्य चाल्पत्वात् तदभावो महत्तरः ॥ ३६ ॥**

इति वैपरीत्यस्योपपत्तिः । तत्र यस्योभयविधा[2] व्याप्तिरस्ति तद-न्वयव्यतिरेकि । यथा धूमानुमानादि । तत्र हि धूमस्याग्न्य-न्वयो महानसादौ दृश्यते । अग्न्यभावे धूमाभावश्च महाह्रदा-दौ दृश्यते । तेनान्वयव्यतिरेकित्वम् । यस्य पुनरन्वयव्याप्तिरेवा-स्ति, तत् केवलान्वयि । यथा — ज्ञानं ज्ञानान्तरप्रकाश्यं वस्तुत्वा-द् घटवदित्यादि । अत्र हि ज्ञानप्रकाश्यत्वाभावे वस्तुत्वाभावो न

१. 'रतो' ख. पाठः. २. 'धापि व्या' ख. पाठः.

क्वचिदपि दर्शयितुं शक्यः, सर्वेषामप्यर्थानां ज्ञानप्रकाश्यत्वात्। अतो व्यतिरेकव्याप्त्यभावः। यस्य तु व्यतिरेकव्याप्तिरेवास्ति, तत् केवलव्यतिरेकि। यथा — सर्वं ज्ञानं स्वप्रकाशं ज्ञानत्वाद्, यस्य स्वप्रकाशत्वं नास्ति तस्य ज्ञानत्वमपि नास्ति, यथा घटस्येति। अत्र हि यस्य स्वप्रकाशत्वं तस्य ज्ञानत्वमप्यस्तीति क्वचिद् दर्शयितुमशक्यत्वादन्वयव्याप्तिर्नास्ति। स चायं केवलव्यतिरेकी हेतुरावीतहेतुरिति चोच्यते।

तं च कौमारिलाः प्रायो नेच्छन्ति व्यतिरेकिणम्।
तत्स्थाने चाभिषिञ्चन्ति पञ्चमीं प्रमितिं पुनः ॥ ३७ ॥

क्वचित् प्रसिद्धमन्यत्र साध्यते ह्यनुमानतः।
स्वप्रकाशत्वधर्मो[2] हि सिद्धो नान्यत्र कुत्रचित् ॥ ३८ ॥

तेन तत्साधने पक्षो ह्यप्रसिद्धविशेषणः।
एवञ्च दुष्टपक्षोऽयं व्यतिरेकी निवार्यताम् ॥ ३९ ॥

[3]यैश्चानुकूलतर्के सत्यप्रसिद्ध[4]विशेषणः।
न दोष इति भाषन्ते तार्किकास्तदसङ्गतम् ॥ ४० ॥

तर्को हि नाप्रसिद्धार्थं क्वचित् साधयितुं क्षमः।
अतोऽप्रसिद्धतादोषस्तर्के सत्यपि दुस्त्यजः ॥ ४१ ॥

इति। ननु वेद्यत्वं क्वचिदत्यन्तं नास्ति धर्मत्वाद् यथा घटत्वं पटादिष्वित्यनेन प्रमाणेन वेद्यत्व[6]विरहरूपे स्वयंप्रकाशत्वे सामा-

१. 'मस्तीति क्वचिदपि द' क. पाठः. २. 'मेश्च सि' ख. पाठः. ३. 'त' क. पाठः. ४. 'द्धि' ख. पाठः. ५. 'नानुमानेन' क. पाठः. ६. 'त्वावि' क. पाठः.

न्यतः प्रसिद्धे पुनर्विशेषेण पक्षे साध्यत इति नाप्रसिद्धविशेषणत्वं पक्षस्य । तदुक्तं—

"सामान्यतोऽनुमानेन प्रसिद्धेऽपि विशेषणे ।
कथं कथय पक्षोऽयमप्रसिद्धविशेषणः ॥"

इति । **अस्तु वा तर्ह्येवम् ।**

**अत एव चिदानन्दः केवलव्यतिरेकिणम् ।**
**नैव साक्षान्निराचक्रे नापि साक्षादुपाददे ॥ ४२ ॥**
**तस्मात् सामान्यतः सिद्धिहीनाश्चेद् व्यतिरेकिणः ।**
**सर्वथा वारणीया इत्येतत् तावद् व्यवस्थितम् ॥ ४३ ॥**
**इह च स्वप्रकाशत्वे नास्ति सामान्यतोऽनुमा ।**
**वस्तुत्वादेर्हि धर्मस्य नात्यन्तं नास्तिता क्वचित् ॥ ४४ ॥**

इति । अत्र चान्वयव्यतिरेकिहेतोः पञ्च रूपाणि — पक्षधर्मत्वं, सपक्षे सत्त्वं, विपक्षाद् व्यावृत्तत्वम्, अबाधितविषयत्वम्, असत्प्रतिपक्षत्वं चेति । तत्र जिज्ञासितसाध्यः पर्वतादिः[1] पक्षः । तन्निष्ठत्वं हेतोः पक्षधर्मत्वम् । निश्चितसाध्यो[2] महानसादिः सपक्षः । तत्र वर्तमानत्वं सपक्षे सत्त्वम् । निश्चितसाध्याभावो[3] महाह्रदादिर्विपक्षः । तत्रावर्तमानत्वं विपक्षाद् व्यावृत्तिः । साध्यस्याबाधितत्वमबाधितविषयत्वम् । प्रतिहेत्वभावोऽसत्प्रतिपक्षत्वमिति । केवलान्वयिनस्तु विपक्षाद् व्यावृत्तिर्नास्ति, विपक्षाभावात् । अतस्तस्य चत्वारि रूपाणि । केवलव्यतिरेकिणः सपक्षे

---

१. 'पक्षः पर्वतादिः ।' ख. पाठः. २. 'ध्यः सपक्षो महानसादिः ।' ख. पाठः.
३. 'वो विपक्षो महाह्रदादिः ।' ख. पाठः.

सत्त्वं नास्ति, सपक्षाभावात् । यदि तु सपक्षे सत्यपि पक्षमात्रवृत्तिर्हेतुः स्यात्, तर्ह्यसाधारणो नाम हेत्वाभास एव स्यात् । यथा 'नित्या भूः गन्धवत्त्वादि'ति । अत्र हि नित्यत्वेन सपक्षभूतानामाकाशादीनां सद्भावेऽपि भूमात्रवृत्ति गन्धवत्त्वम् । अतोऽसति सपक्षे पक्षमात्रवृत्तिः केवलव्यतिरेकीति लक्षयन्ति तार्किकाः ।

**पक्षमात्रस्थितं सिध्येत् पक्षमात्रस्थहेतुना ।**
**अन्यत्र स्थितमाकष्टुं तद्गतस्यैव पाटवम् ॥ ४५ ॥**

इति । अतः सपक्षे सत्त्वाभावाच्चतूरूप एव व्यतिरेकी ।

**तत् सिद्धं द्वैविध्यं* त्रैविध्यं चानुमानस्य ॥ ४५½ ॥**

तच्च पुनरपि द्वेधा दृष्टं सामान्यतो दृष्टं चेति । तत्र—

**दृष्टैकव्यक्तिविषयं दृष्टमिष्टं हि मादृशाम् ।**
**कृत्तिकोदयमालक्ष्य रोहिण्यनुमितिर्यथा ॥ ४६½ ॥**

**एवं सामान्यतो व्याप्तिदृष्ट्वा यत्रानुमीयते ।**
**तद्धि सामान्यतो दृष्टं यथा वह्न्यनुमादिकम् ॥ ४७½ ॥**

**तार्किकादयस्तु**—प्रत्यक्षयोग्यार्थविषयमग्न्याद्यनुमानं दृष्टम्, अतीन्द्रियार्थविषयं चक्षुराद्यनुमानं सामान्यतो दृष्टमित्याहुः । तदयुक्तम् । अतीन्द्रियार्थानामनुमातुमशक्यतया चक्षुरादीनामप्यर्थापत्त्यैव साध्यमानत्वात् । तथाहि—

---

* व्याप्तेरिति शेषः ।

व्याप्त्येकशरणं तावदनुमानमिति स्थितम्।
तद् व्याप्तिदर्शितान्मार्गाच्चलितुं क्षमते कुतः॥ ४८½॥

ततश्च व्याप्तिविज्ञाने यादृशं वस्तु दृश्यते।
तादृगेवानुमातव्यं यथोष्णो भास्वरोऽनलः॥ ४९½॥

न चातीन्द्रियवस्तूनां प्रागृदृष्टाकारयोगिता।
दृश्यत्वं तेजसां दृष्टं चक्षुषस्तदसम्भवात्॥ ५०½॥

अत एव हि सर्वत्राप्यत्यन्तादृष्टसाधने।
विशेषबाधकं नाम दोषं घोषयितास्महे॥ ५१½॥

तस्माद् रूपादिसन्दर्शनान्यथानुपपत्तितः।
चक्षुराद्याः प्रसाध्यन्ते न तेष्वनुमितिर्मता॥ ५२½॥

इति। तच्चानुमानं स्वार्थपरार्थभेदेनापि द्विविधमाहुः। यत्र स्वयमेव धूमादिकं दृष्ट्वा व्याप्त्यादिनिरूपणेनानुमीयते, तत् स्वार्थम्।

यदा पुनः स एवार्थः परवाक्येन बोध्यते।
तदा परार्थमित्याहुस्तयोरेतावती भिदा॥ ५३½॥

तत्र परार्थानुमानवाक्यं पञ्चावयवमिति तार्किकाः। प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः। यथा— अयं पर्वतोऽग्निमान्, धूमवत्त्वाद्, यो यो धूमवान् स सोऽग्निमान् यथा महानसः, धूमवांश्चायं, तस्मादग्निमानेवेति। अत्र

---

१. 'यननि' ख. पाठः,

परं[1] बोधयितुं पक्षवचनं[2] प्रतिज्ञा पर्वतोऽग्निमानिति । साधनत्वावेदकं लिङ्गवचनं हेतुः धूमवत्त्वादिति । व्याप्तिप्रदर्शनपुरस्सरं दृष्टान्ताभिधानमुदाहरणं यो यो धूमवान् स सोऽग्निमान् यथा महानस इति । सिद्धव्याप्तिकस्य पक्षे उपनयनमुपनयः धूमवांश्चायमिति । सहेतुकं पक्षस्य पुनर्वचनं निगमनं तस्मादग्निमानिति । अत्र ब्रूमः —

प्रतिज्ञया निगमनं हेतुनोपनयस्तथा ।
गतार्थ इति कः कुर्यात् पञ्चावयवघोषणाम् ॥ ५४½ ॥
तस्मात् त्र्यवयवं ब्रूमः पौनरुक्त्यासहा वयम् ।
उदाहरणपर्यन्तं यद्वोदाहरणादिकम् ॥ ५५½ ॥

सौगतास्त्वाहुः — यो[3] धूमवान् सोऽग्निमान् यथा महानसः, धूमवांश्चायमित्येतावदुक्तौ तस्मादग्निमानित्यर्थात् सिध्यति । अत उदाहरणोपनयौ द्वावेवावयवाविति । तदपि साध्यांशेऽध्याहारदोषप्रसङ्गादपास्तम् ।

तदेवं पौनरुक्त्येन तथाध्याहारदोषतः ।
तर्कबौद्धमते हित्वा वयं त्र्यवयवे स्थिताः ॥ ५६½ ॥

तत्रोदाहरणान्तं यथा — पर्वतोऽग्निमान्, धूमवत्त्वाद्, यो धूमवान् सोऽग्निमान् यथा महानस इति । उदाहरणादिकं यथा — यो धूमवान् सोऽग्निमान् यथा महानसः, धूमवांश्चायं, तस्मादग्निमानिति ।

---

१. 'रं प्रतिपादयि' ख. पाठः. २. 'नं हि प्र' ख. पाठः. ३. 'यो यो धू' क. पाठः.

**अथ प्रतिज्ञाहेत्वोश्च दृष्टान्तस्य च दूषणम् ।**
**क्रमेण कथ्यतेऽस्माभिर्यद् वेद्यं वादिनां पुरः ॥ ५७½ ॥**

तत्र परप्रतिपादनार्थं पक्षवचनं हि प्रतिज्ञा । जिज्ञासितधर्मविशिष्टश्च पक्ष इत्युक्तम् । ततश्च तद्रूपपरिच्छेदात् तद्विपरीतपरिच्छेदाद् वान्यत्राप्रसिद्धत्वाद् वा यो न जिज्ञासितो धर्मस्तद्विशिष्टस्य न पक्षत्वमिति सिद्धविशेषणो बाधितविशेषणोऽप्रसिद्धविशेषणश्च पक्षाभास एवेति तदावेदकं वचनमपि प्रतिज्ञाभास एव । तद् यथा — वह्निरुष्ण इति सिद्धविशेषणः । वह्निरनुष्ण इति बाधितविशेषणः । क्षित्यादिकं सर्वज्ञकर्तृकमित्यप्रसिद्धविशेषणः, घटादिषु क्वचिदपि सर्वज्ञकर्तृकत्वस्यासिद्धत्वात् । बाधकप्रमाणभेदेन बाधितविशेषणत्वावान्तरविशेषो द्रष्टव्यः । तत्र वह्निरनुष्ण इति प्रत्यक्षबाधः पूर्वमुक्तः । अनुमानस्यापि यदा प्रबलत्वं स्पष्टं भवति, तदानुमानबाधः । यथा 'मन इन्द्रियं न भवति अभूतात्मकत्वाद् दिगादिवदि'ति । अत्रेन्द्रियत्वेन मनसोऽनुमीयमानत्वान्मनोधर्मिग्राहकेणैवानुमानेन तस्यानिन्द्रियत्वं बाधितम् । एवं शीघ्रभाविनामनुमानानां सर्वत्र बाधकत्वं द्रष्टव्यम् । शाब्दबाधो यथा — यागादयः स्वर्गसाधनं न भवन्ति क्रियात्वाद् गमनवदिति । अत्र 'स्वर्गकामो यजेते'त्यादिवाक्यैर्यागादेः स्वर्गसाधनत्वबोधनात् तदभावः शाब्दबाधितः । यथा वा — स्पृश्यं नरास्थि प्राण्यङ्गत्वात् शङ्खवदिति । 'गौर्गवयसदृशो न भवति प्राणित्वात् पुरुषवदि'त्यत्रोपमानबाधः । 'देवदत्तो बहिर्नास्ति त[illegible]त्वादि'त्यत्रार्थाप-

त्तिबाधः, अर्थापत्त्या बहिर्भावस्य साध्यमानत्वात् । 'रूपवान् वायुः द्रव्यत्वात् पृथिवीवदि'त्यत्रानुपलम्भबाधः । अन्येऽपि प्रतिज्ञादोषाः सन्ति ।

यावज्जीवमहं मौनीत्युक्तौ हि स्वोक्तिबाधनम् ।
नेन्दुश्चन्द्रगिरा वाच्य इति लोकविरुद्धता ॥ ५८½ ॥
शब्दादेः प्रागनित्यत्वमुक्तं येनैव तेन तु ।
नित्यत्वे पुनरुक्ते स्यात् पूर्वसञ्जल्पबाधनम् ॥ ५९½ ॥

इति । व्याप्तः साधनधर्मो हेतुः । असिद्धो विरुद्धोऽनैकान्तिकोऽसाधारणश्चेति चत्वारस्तदाभासाः । तत्रासिद्ध उच्यते ।

हेतोर्व्याप्तिमतः पक्षसम्बन्धित्वेन वेदनम् ।
सिद्धिरित्युच्यते हेतुसम्पूर्तिस्तावतैव हि ॥ ६०½ ॥
तेषामेकतमांशस्याप्यभावे[2] स्यादसिद्धता ।
हेतोर्व्याप्तेश्च पक्षस्य सम्बन्धस्य ग्रहस्य च ॥ ६१½ ॥

तत्र हेतुस्वरूपस्यैवासिद्धौ स्वरूपासिद्धः । यथा 'बुद्धो मोहरहितः सर्वज्ञत्वादि'त्यत्र सर्वज्ञत्वं नाम नास्माकं क्वचित् सिद्धम् । अस्य विशेषणासिद्धो विशेष्यासिद्ध इति च द्वौ भेदौ भवतः । आद्यो यथा 'बुद्धो धर्मोपदेष्टा सर्वज्ञत्वे सति शरीरित्वादि'ति, अन्यस्तु 'शरीरित्वे सति सर्वज्ञत्वादि'ति । व्याप्त्यभावे व्याप्यत्वासिद्धः । यथा — क्रतुहिंसा अधर्मः हिंसात्वादिति । अत्र सोपाधिकत्वाद् व्याप्त्यभावः । पक्षाभावे त्वा-

१. 'धितत्वा' क. पाठः. २. 'सिद्धौ स्या' क. पाठः.

श्रयासिद्धः । यथा — गगनकुसुमं सुरभि कुसुमत्वादिति । हेतोः पक्षसम्बन्धाभावे सम्बन्धासिद्धः । यथा — शब्दोऽनित्यः चाक्षुषत्वादिति । यस्य तु पक्षैकदेशे सम्बन्धो नास्ति, स भागासिद्धः[1] । स एव पक्षव्याप्त्यभावाद् व्याप्त्यसिद्ध इति च क्वचिदुच्यते । यथा — वेदाः पौरुषेयाः उपाख्यानात्मकत्वादिति । यदा तु विशेषणस्य विशेष्यस्य वा पक्षसम्बन्धो नास्ति, तदा विशेषणासिद्धविशेष्यासिद्धौ भवतः । यथा — अनित्यं गगनं जन्यत्वे सति द्रव्यत्वादिति, द्रव्यत्वे सति जन्यत्वादिति च । यत्र तु विशेषणं व्यावर्त्याभावाद् व्यर्थमेवेति सम्बन्धानर्हं भवति, स व्यर्थविशेषणासिद्धः । यथा — घटोऽनित्यः द्रव्यत्वे सति कृतकत्वादिति । एवं कृतकत्वे सति द्रव्यत्वादिति व्यर्थविशेष्यासिद्धः । यदा तु हेतुः पक्षसम्बन्धित्वेन न प्रयुज्यते, किन्त्वाश्रयान्तरसम्बन्धित्वेन, तदा व्यधिकरणासिद्धः । यथा — अनित्यो घटः तद्गुणस्य कृतकत्वादिति । अत्र न घटाश्रितं कृतकत्वं, किन्तु तद्गुणाश्रितमिति व्यधिकरणासिद्धः । यत्र[2] पक्षाद् व्यतिरेकाभावेन पक्षसम्बन्धित्वं नास्ति, स व्यतिरेकासिद्धः । यथा — अनित्यं गगनं गगनत्वादिति । अत्र गगनस्वरूपादन्यद् गगनत्वं नाम नास्तीति । एषां स्वरूपादीनामज्ञानेऽज्ञानासिद्धः सन्दिग्धासिद्धो वा भवति । यथा — देवदत्तो बहुधनो भविष्यति तद्धेतुभूतादृष्टशालित्वादिति । अत्र तादृशादृष्ट[3]सद्भावे प्रमाणं नास्तीत्यज्ञातत्वम् । एवम् 'अ-

---

१. 'द्धः । (यथा?) स' क. पाठः. २. 'स्य तु प' क. पाठः. ३. 'ष्टशालित्वे प्र' क. पाठः.

ग्निमान् पर्वतः धूमवत्त्वादि'त्येतावत्प्रयोगेऽनुपदर्शितव्याप्तिक-त्वाद् व्याप्त्यज्ञानासिद्धः। एवमेव सन्दिग्धविशेषणासिद्धादयो-ऽप्यज्ञानासिद्धभेदा ऊहितव्याः। तार्किकास्तु —पक्षे हेतुस्व-रूपाभाव एव स्वरूपासिद्धिरिति सम्बन्धासिद्धस्य स्वरूपासिद्ध-त्वमाहुः। तदयुक्तम्। सर्वज्ञत्वादेः स्वरूपमेव क्वचिदपि ना-स्ति। चाक्षुषत्वादेस्तु पक्षसम्बन्धमात्रं नास्तीति पृथक्त्वप्रतीतेः। एते चासिद्धभेदाः यदान्यतरस्यैव वादिनोऽसिद्धा भवन्ति, तदान्यतरासिद्धा इत्युच्यन्ते। तत्र 'बुद्धो मोहरहितः सर्वज्ञ-त्वादि'त्युक्तोऽस्माकमेवासिद्धः। एवमुभयोरप्यसिद्धावुभयासिद्ध-ता वेदितव्या। यथा —शशो हिंस्रः विषाणित्वादिति।
अथ विरुद्धः।

**स च बाधक इत्येवं वार्तिके व्यपदिश्यते।**
**द्विधा चासौ स्वरूपस्य विशेषस्य च बाधनात् ॥६२½॥**

तत्र साध्यविपरीतव्याप्तः साध्यस्वरूपविरुद्धः। यथा 'शब्दो नित्यः कृतकत्वादि'ति। अत्र नित्यत्वविपरीतेनानित्यत्वेन व्याप्तं कृतकत्वमिति नित्यत्वं प्रति विरुद्धत्वात् तस्य बाधकं भवति। साध्यविशेषस्य विपरीतेन विशेषेण व्याप्तो विशेषवि-रुद्धः। यथा 'क्षित्यादिकं सकर्तृकं कार्यत्वाद् घटवदि'ति। अत्र साध्यस्य क्षित्यादिकर्तुरशरीरित्वं नाम विशेषः। तस्य विपरीतेन शरीरित्वरूपेण विशेषेण व्याप्तं घटादिषु कार्यत्वं दृष्ट-मित्यशरीरित्वस्य बाधकं भवति।

**अशरीरित्वबाधे च कर्तृमत्तापि[1] बाध्यते।**
**प्रत्यक्षात् सशरीरित्वविशेषे बाधिते सति ॥ ६३½ ॥**

---

१. 'हि' क. पाठः.

**अशरीरित्वमादाय स्थास्यामीति कृतोद्यमा ।**
**कर्तृमत्ता हि तस्यापि बाधे नश्येन्निराश्रया ॥ ६४ ॥**
**इत्थं साध्यनिरोधित्वादेष दूषणमेव नः ।**
**तमीदृशमजानद्भ्यस्तार्किकेभ्योऽयमञ्जलिः ॥ ६५ ॥**

सव्यभिचारोऽनैकान्तिकः । विपक्षेऽपि वर्तमान इति यावत् । स एव साधारण इति चोच्यते । यथा[1] — अनित्यः शब्दः प्रमेयत्वादिति । अत्र हि प्रमेयत्वं[2] नित्येष्वपि वर्तत इत्यनैकान्तिकम् । यत्र तु विपक्षवृत्तित्वं सन्दिग्धं, स सन्दिग्धानैकान्तिकः । यथा — क्षणिका भावाः सत्त्वादित्यत्राक्षणिकत्वेऽपि सत्त्वस्य बाधाभावाद् विपक्षवृत्तिः शङ्किता भवति । सति सपक्षे पक्षमात्रवृत्तिरसाधारणः । यथा — नित्या भूर्गन्धवत्त्वादिति । केचित् पुनराहुः — असाधारणोऽप्यनैकान्तिक एव । यथा खल्वन्वयस्य विपक्षेऽपि वर्तनात् प्रमेयत्वस्य व्यभिचारित्वम्, एवं व्यतिरेकस्यापि स्वस्थानभूतं विपक्षमतिक्रम्य सर्वेषु सपक्षेष्वपि वर्तनाद् गन्धवत्त्वस्यापि व्यभिचारित्वमस्तीति ।

**सत्यं किन्त्वन्वयस्यैव स्वस्थानादतिलङ्घनम् ।**
**व्यभिचारतया ख्यातं क्लिष्टस्त्वदुदितः क्रमः ॥ ६६ ॥**
**तेन साधारणस्यैव व्यभिचारित्वमीरितम् ।**
**हेत्वाभासान्तरत्वेन चासाधारण ईरितः ॥ ६७ ॥**

---

१. 'था — नित्यः' ख. पाठः. २. 'त्वमानि' ख. पाठः.

यद्वा त्वदुक्तमार्गेण तस्यापि व्यभिचारतः ।
अनैकान्तिकतैवास्तु नास्माकं काचन क्षतिः ॥ ६८½ ॥
तस्मात् त्रेधा चतुर्धा वा हेत्वाभासा व्यवस्थिताः ।
पञ्चधा तार्किकाः प्राहुः षोढान्ये तदसङ्गतम् ॥ ६९½ ॥

असिद्धविरुद्धानैकान्तिकप्रकरणसमकालात्ययापदिष्टभेदेन पञ्चधेति तार्किकाः । अप्रयोजकः षष्ठ इति केचित् । अनध्यवसित एव षष्ठ इति भासर्वज्ञः । तत्र प्रतिहेतुमान् हेतुः प्रकरणसमः सत्प्रतिपक्ष इति चोच्यते । यथा — अप्रत्यक्षो वायुः अरूपवत्त्वाद् मनोवत्, प्रत्यक्षो वायुः स्पर्शवत्त्वाद्, घटवदिति । सोऽयमुक्तेष्वेवान्तर्भावयितव्यः । तथाहि—तुल्यबलं विरुद्धहेतुद्वयं तावन्न सम्भवति । तथासति वस्तुनोऽनुमानद्वय[1]बलप्रापितै[2]विरुद्धरूपद्वय[3]प्रसङ्गात् । प्रबलदुर्बलयोर्विरोधे[4] दुर्बलस्य प्रबलापहृतविषयत्वे[5]न बाधितविशेषणत्वाभिधं पक्षदूषणमेवेदं, किं हेत्वाभासान्तरकथया । ननु हेत्वोर्विशेषानवगमवेलायामाभिमानिकतुल्यबलत्वसम्भवात् तादात्विकं प्रकरणसमत्वम्[6]। मैवम् । तदापि बाधितविशेषणत्वस्य सन्देहावस्थैव भवतु, न तु जात्यन्तरमन्वेषणीयम् । अन्यथा सन्दिग्धासिद्धादीनामप्यन्यत्वं स्यादिति । अथवा संशयहेतुरनैकान्तिक इत्यनैकान्तिकस्य लक्षणमाश्रीयते । साधारणधर्मादसाधारणधर्माद् विप्रतिपत्तेश्च सं-

१. 'यमा' क. पाठः. २. 'तस्य वि' ख. पाठः. ३. 'यस्य प्र' ख. पाठः. ४. 'धे तु दु' ख. पाठः. ५. 'त्वाद् बा' ख. पाठः. ६. 'मस्ति' । क. पाठः.

शयो भवति । यथा — साधारणाद् ऊर्ध्वत्वात् स्थाणुर्वा पुरुषो वेति, असाधारणाच्च गन्धवत्त्वात् पृथिवी नित्यानित्या वेति, वादिविप्रतिपत्तेश्च शब्दो नित्योऽनित्यो वेति । तत्र विप्रतिपत्ति-हेतुकः संशयः प्रतिसाधनप्रयोगे प्राप्त इत्यनैकान्तिकेष्वेव प्र-करणसमोऽन्तर्भावयितव्यः । तस्य चास्य सप्रतिसाधनस्यैकेनैव हेतुना प्रतिकूलसाधने विरुद्धाव्यभिचारी नामावान्तरजातिः । यथा — क्षित्यादिकं सकर्तृकं कार्यत्वाद् घटवदित्यत्र 'क्षि-त्यादिकमीश्वरकर्तृकं न भवति कार्यत्वाद् घटवदि'ति । अत्र हि कार्यत्वं घटादिषु सकर्तृकत्वेनेवेश्वरकर्तृकत्वाभावेनाप्यव्यभि-चरितम् । ईश्वरकर्तृकत्वाभावश्च सकर्तृकत्वमुखेनेश्वरं साधयतां तेषां विरुद्ध एवेति विरुद्धाव्यभिचारित्वं कार्यत्वस्य ।

एवं परोदितैरेव पक्षहेतुनिदर्शनैः ।
विरुद्धसाधनेऽस्माकं विरुद्धाव्यभिचारिता ॥ ७०½ ॥

सर्वसत्प्रतिपक्षाणां विरुद्धाव्यभिचारिताम् ।
कदाचिद्रूचुराचार्या न त्वमुष्यैव केवलम् ॥ ७१½ ॥

चिदानन्देन तु व्यक्तमयमेव तथोच्यते ।
यथातथास्तु नामैतन्नाभासान्तरमत्र नः ॥ ७२½ ॥

तत् सिद्धं बाधितविशेषणेऽनैकान्तिके वान्तर्भूतं सप्र-तिसाधनत्वं नाम दूषणम् । भासर्वज्ञस्तु स्वपक्षपरपक्षसिद्धा-वपि त्रिरूपो हेतुः प्रकरणसम इत्युक्त्वा तत्र दुर्लभलब्धमेकमु-

---

१. 'नाव्य' क. पाठः.

दाहरणं दर्शयति । यथा — शब्दोऽनित्यः पक्षसपक्षयोरन्यतरत्वात् सपक्षवदिति । अत्र हि 'शब्दो नित्यः पक्षसपक्षयोरन्यतरत्वादि'त्यपि वक्तुं शक्यमिति । तदिदमयुक्तम् । इह खलु पक्षसपक्षयोरन्यतरत्वादित्यस्यानित्यत्वे साध्ये शब्दघटयोरन्यतरत्वादित्यर्थः । नित्यत्वे तु शब्दाकाशयोरन्यतरत्वादित्यर्थः । अतः कथमेक एव हेतुः पक्षद्वयेऽपि समान इत्युच्यते ।

शब्दसादृश्यमेवात्र विद्यतेऽर्थस्तु भिद्यते ।
तस्माद् विरुद्धधर्माभ्यां व्याप्तिर्नैकस्य सम्भवेत् ॥७३½॥
कथं तर्हि भवान् ब्रूते विरुद्धाव्यभिचारिणम् ।
सत्यं न साध्यते तत्र साक्षात् साध्यविपर्ययः ॥ ७४½ ॥
सकर्तृकत्वं वदतामिष्टा हीश्वरकर्तृता ।
सैवात्र वार्यतेऽस्माभिस्तेनार्थात् प्रतिकूलता ॥ ७५½ ॥
भवांस्त्वनित्यनित्यत्वे साक्षादेव विरोधिनी ।
एकेन साधयन्नद्य हास्यतामेव यास्यति ॥ ७६½ ॥

इति । यस्तु बाधितविषयापरपर्यायः कालात्ययापदिष्टो नाम हेत्वाभास उक्तः 'अग्निरनुष्णः [1]द्रव्यत्वादि'त्यादिः, सोऽपि बाधितविशेषणो नाम पक्षाभास एव ।

ननु नो पक्षदोषानेवानुमन्यामहे वयम् ।
पक्षदृष्टान्तदोषाणां हेत्वाभासेषु योजनात् ॥ ७७½ ॥

तत्र सिद्धविशेषणे तावत् —

---

१. 'कृतकत्वा' क. पाठः.

पक्षः खल्वाश्रयो हेतोर्न च निश्चितधर्मवान् ।
पक्षत्वं भजते तस्मादाश्रयासिद्धिरेव सा ॥ ७८½ ॥

तथैव यदि दोषः स्यादप्रसिद्धविशेषणः ।
तदापि पक्षतानाशादाश्रयासिद्धिरुच्यताम् ॥ ७९½ ॥

किञ्च,

किं पक्षदोषैः कथितैरिदानीं
दृष्टान्तदोषा अपि वक्ष्यमाणाः ।
अन्तर्गता एव हि हेतुदोषे
न हेतुदोषादपरोऽस्ति दोषः ॥ ८०½ ॥

तदेवं सर्वदोषेषु हेत्वाभासप्रवेशिषु ।
निःसहायः कथं तिष्ठेत् स बाधितविशेषणः ॥ ८१½ ॥

तस्मादितरदोषवद् बाधितविशेषणोऽपि हेत्वाभासतयैव वक्तव्य इति । अत्र ब्रूमः ।

आभाससङ्करे तावत् पुरः स्फुरितदूषणम् ।
उद्भाव्यमिति सर्वेषां निर्विवादं हि वादिनाम् ॥ ८२½ ॥

ततश्च पक्षवचने दोषः कोऽपि चकास्ति चेत् ।
पक्षस्यैव स वक्तव्यः किं न्यायं नानुमन्यते ॥ ८३½ ॥

पक्षदुष्टत्वमाश्रित्यैवोक्ता सिद्धविशेषणे ।
त्वयापि ह्याश्रयासिद्धिः किं पुरो भाति तत्र ते ॥ ८४½ ॥

एवं साध्यस्याप्रसिद्धिस्तथा बाधितसाध्यता ।
पक्षोक्तावेव निर्भातीत्युचिता पक्षदोषता ॥ ८५½ ॥

इत्थं दृष्टान्तदोषाश्च वक्ष्यमाणाः समर्थिताः ।
यो यत्र स्फुरितो दोषः स तस्यैवेति निर्णयात् ॥ ८६½ ॥

नावदत् पक्षदोषादीनक्षपादमुनिः पुरा ।
तद्भक्तिमोहिता मा मा न्यायं त्यजत तार्किकाः ॥८७½॥

इति । तस्माद् बाधितविशेषणः पक्षाभास एवेति न पञ्चमो हेत्वाभासोऽङ्गीकार्य इति । ये पुनरनुकूलतर्काभावे हेतोः प्रयोजकत्वं नास्तीत्यप्रयोजकं नाम हेत्वाभासान्तरमातिष्ठन्ते, तेऽपि व्याप्यत्वासिद्धमेव तथा मन्यन्ते । सर्वेष्वप्यनुमानेष्वनुकूलतर्कै-र्व्यभिचारशङ्कामपास्य निरुपाधिकत्वं स्थापनीयम् । ततस्तदभावे निरुपाधिकसम्बन्धानिश्चयाद् व्याप्त्यसिद्धिरेव । सोऽयं व्याप्त्यसिद्धो हेतुरुपाधिमानित्यन्यथासिद्ध इत्यप्रयोजक इति परप्रयुक्तव्याप्त्युपजीवीति सन्दिग्धव्याप्तिक इति च व्यपदिश्यते, न त्वाभासान्तरमिति । यत्तु भासर्वज्ञेनोक्तं — साध्यासाधकः पक्ष एव वर्तमानो हेतुरनध्यवसितः । यथा—नित्या भूर्गन्धवत्त्वादिति, सर्वं क्षणिकं सत्त्वादित्यादि च । तत्रादिमः प्रकारोऽसाधारण एव । 'सर्वं क्षणिकं सत्त्वादि'त्यत्र तु सर्वस्य पक्षीकृतत्वात् सपक्षभूतं विपक्षभूतं वा किञ्चिन्नास्तीत्यन्वयव्याप्ति-र्व्यतिरेकव्याप्तिर्वा न वक्तुं शक्येति व्याप्त्यसिद्धिरेवेयं, न त्वाभासान्तरमित्यास्तामेतत् । तस्मादस्मदुक्तैव हेत्वाभासव्यवस्थेति ।

अथ दृष्टान्ताभासाः ।

साध्यसाधनयोर्व्याप्तिप्रतिपत्तिस्थलं हि यत् ।
तदुदाहरणं नाम दृष्टान्त इति चोच्यते ॥ ८८½ ॥

तद् द्विविधं साधर्म्यवैधर्म्यभेदात् । तत्र साधनस्य साध्येनान्वयोपदर्शनं साधर्म्यम् । यथा — यो धूमवान् सोऽग्निमान् यथा महानस इति । साध्याभावस्य साधनाभावेनान्वयोपदर्शनं वैधर्म्यम् । यथा — योऽग्निमान् न भवति नासौ धूमवान् यथा पाथ इति । साध्यहीनः साधनहीनः उभयहीनः आश्रयहीन इति साधर्म्योदाहरणाभासाश्चत्वारः । तद् यथा — नित्यो ध्वनिः अकारणत्वाद् यदकारणं तन्नित्यमित्यत्र प्रागभाववदिति साध्यहीनः, प्रध्वंसवदिति साधनहीनः, घटवदित्युभयहीनः, नरशृङ्गवदित्याश्रयहीनः । नित्यत्वमत्राविनाशित्वमेव विवक्षितं, न *कोटिद्वयराहित्यम् । वैधर्म्योदाहरणाभासा अपि साध्याव्यावृत्तादयश्चत्वारः । यथा — यन्नित्यं न भवति न तदकारणमित्यत्र यथा प्रध्वंस इति साध्याव्यावृत्तः, यथा प्रागभाव इति साधनाव्यावृत्तः, यथा गगनमित्युभयाव्यावृत्तः, यथा नरशृङ्गमित्याश्रयहीनः । अत्र चोभयविधोदाहरणेऽपि अव्याप्त्यभिधानं विपरीतव्याप्त्यभिधानमिति च द्वौ दोषौ । तत्र 'अग्निमान् पर्वतः धूमवत्त्वाद् यथा महानस' इत्येतावदुक्तेऽव्याप्त्यभिधानं, 'यो धूमवान् सोऽग्निमानि'ति व्याप्तेरनुक्तत्वात् । तथैव 'योऽग्निमान् न भवति, नासौ धूमवानि'ति व्याप्तिमनुक्त्वैव 'यथा महाह्रद' इत्येतावत्युक्तेऽप्यव्याप्त्यभिधानम् । यदा तु 'यो धूमवान् सोऽग्निमानि'ति वक्तव्ये 'योऽग्निमान् स धूमवानि'त्युच्यते, तदा विपरीतव्याप्त्यभिधानम् । तथैव

---

* उत्पत्तिशून्यत्वे सति नाशाप्रतियोगित्वरूपमत्र कोटिद्वयम् ।

योऽग्निमान् न भवति, नासौ धूमवानिति वक्तव्ये यो धूमवान् न भवति, नासावग्निमानिति प्रयोगेऽपि द्रष्टव्यमिति ।

अनुमानप्रपञ्चोऽयं बहुभिर्बहुधोदितः ।
चिदानन्दोक्तरीत्या तु मयैवमिह दर्शितः ॥ ८९ ॥

इति मानमेयोदये

प्रमाणपरिच्छेदेऽनुमानपरीक्षा ।

अथ शब्दपरीक्षा ।

अनुमानतः परस्तादुपमानं वर्णयन्ति तर्कविदः ।
वादिपरिग्रहभूम्ना वयं तु शाब्दं पुरस्कुर्मः ॥ ९०[1] ॥
तत्र तावत् पदैर्ज्ञातैः पदार्थस्मरणे कृते ।
असन्निकृष्टवाक्यार्थज्ञानं शाब्दमितीर्यते ॥ ९१ ॥

तदिदं शाब्दज्ञानं व्युत्पत्त्यधीनमिति तत्प्रकारमादौ प्रदर्शयामः । बालो हि 'गामानय', 'पुत्रस्ते जात' इत्यादिवाक्यानन्तरं प्रवृत्तिं हर्षादिकं वा कस्याचिदुपलभ्य तयोर्बुद्धिपूर्वकत्वाद् गवानयनपुत्रजननाद्यर्थबुद्ध्यनन्तरमेवास्य प्रवृत्तिहर्षादिकं जातमिति बुध्यमानस्तादृशार्थबुद्धेश्च शब्दानन्तरमेव जातत्वाद् गामानयेत्यादिशब्दस्य गवानयनाद्यर्थबोधकत्वमवबुध्यते। तदा च पिण्डित एव शब्दः पिण्डितस्यैवार्थस्य बोधकतया ज्ञातः । ततश्च 'गां बधान, अश्वमानये'त्यादिप्रयोगान्तरेषु

1. 'म्ना शाब्दं तु वयं पु' क. पाठः.

पदान्तरयोगत्यागरूपावापोद्वापौ दृष्ट्वा गोशब्दः सास्नादिमतो वाचकः, आनय(न?)शब्द आनयनक्रियावाचक इत्यादिपदार्थविवेकमवधारयति । तच्च पदैः पदार्थबोधनं शब्दशक्तिजन्यत्वादभिधानमेवेति पार्थसारथिप्रभृतयः । शब्दोऽपि संस्कारोद्बोधनद्वारेणैव पदार्थं बोधयतीति स्मरणमेव पदार्थज्ञानमिति चिदानन्दादयः । तथाच पदानां प्रत्येकमर्थेषु नियमितानामप्यादितः प्रभृति परिदृष्टमेकविशिष्टार्थज्ञानतात्पर्यं तावदवतिष्ठते । एवं पदार्थज्ञाने स्थिते यत् पुनस्तदनन्तरमेकविशिष्टार्थज्ञानरूपं वाक्यार्थज्ञानं जायते, तत् पदैरेव वा पदार्थस्मृतिभिर्वा जन्यत इति चिन्तायां पदानां पदार्थबोधोपक्षीणत्वाद् व्यवहितत्वाच्च पदार्था एव स्वसंसर्गरूपं वाक्यार्थं बोधयन्तीत्ययं तावत् तार्कि[1]कादिसाधारणः पक्षः । वयं तु पदार्था लक्षणयैव वाक्यार्थं बोधयन्तीति ब्रूमः । वाच्यार्थानुपपत्त्या हि लक्षणा भवति । अत्र च पदैः स्मार्यमाणा गवादिपदार्था यद्यन्योन्यान्वयं विना सामान्यरूपा एवावतिष्ठेरन्, तर्हि पदानां व्युत्पत्तिसमयावधृतमेकविशिष्टार्थबोध[2]तात्पर्यं विरुध्येतेति[3] सामान्यरूपस्य वाच्यस्यानुपपत्तेरन्योन्यान्वयरूपे विशेष एव पदार्थाः पर्यवस्यन्ति । ततश्च गौरियमानीयमानैव, आनयनं च गोसम्बद्धमेवेति परस्परान्वयलाभाद् गवानयनरूपवाक्यार्थसिद्धिः ।

**तेनात्र पदावगताः पुनः पदार्था मिथोऽन्वयं यान्ति ।**
**इत्येवमभिहितान्वयसिद्धान्तो दर्शितोऽस्मदादीनाम् ॥**

---

१. 'तार्किं' ख. पाठः. २. 'धकता' क. पाठः. ३. 'ध्यत इ' क. पाठः.

**सकलपदान्तरपूर्तावितरपदार्थैः समन्वितं स्वार्थम् ।**
**सर्वपदानि वदन्तीत्यन्येषामन्विताभिधानमतम् ॥९३½॥**

गामानयेति प्रथमश्रवणे हि गवानयनरूपस्यान्वितस्यार्थस्य शब्द एव बोधकतया ज्ञातः । अतस्तदनुसारेण पुनरपि पदानामेवान्वितार्थबोधकत्वं वाच्यं, न तु पदार्थानाम् । आवापोद्वापाभ्यां हि पदार्थेषु विविच्यमानेष्वपि तत्र तत्र तैस्तैरन्विता एव पदार्था दृष्टाः, न त्वेकाकिन इत्यन्विते स्वार्थे[1] पदानां शक्तिर्न परित्यज्यते । ननु किं केवलपदार्थबोधः पदेभ्यो नास्त्येव । अस्तीति ब्रूमः । पदानि तावत् पृथक् पदार्थान् स्मारयन्त्येव, न तु तावता विरमन्ति । स्मारितमेव तु स्वं स्वमर्थं पुनरितरपदार्थान्वितत्वेनाभिधायैव विरमन्तीति राद्धान्तः । अतः पदाभिधेय एवान्वितरूपो वाक्यार्थः, न तु पदार्थगम्यः । पदार्थगम्यत्वे च प्रमाणान्तरप्रतिपन्नानामपि पदार्थानामन्वयः स्याद्, न चासौ दृश्यत इति । तदिदं गुरुमतं गौरवादेव हेयम् । अस्मन्मते हि पदार्थानां स्मृतिसिद्धत्वाद् वाक्यार्थस्यापि लक्षणासिद्धत्वाच्छक्त्यन्तरकल्पनैव नास्तीति पदेषु शक्तिकल्पनाप्रस्ताव एव भवतां गौरवमायातम् । किञ्च पदशक्तितः पदार्थशक्तिरेव लघीयसी । तदा खलु गमनरूपस्यैकस्यैवार्थस्यान्वयबोधकत्वे कल्पिते गमनपर्यायाणा[2]मन्येषामप्यन्वयः सिध्यति । पदशक्तौ तु गमनार्थानामनन्ताना[3]ं पदानां शक्तिः कल्पनीयेति

1. 'र्थे शक्तिर्न पदानां परि' ख. पाठः. 2. 'णां सर्वेषां' ख. पाठः.
3. 'नामपि श' क. पाठः.

महागौरवम्। एकवाक्ये च सर्वपदैः प्रत्येकमितरान्वितस्वार्थे बोध्यमाने पदे पदे वाक्यार्थप्रत्ययोऽपि बलादापन्न इति कष्टतरमेतदिति। यत्तु पदार्थानामन्वयबोधकत्वे प्रमाणान्तरप्रातिपन्नानामप्यन्वयः स्यादित्युक्तं, तत्र ब्रूमः। भवतामपि गां बधानेत्युक्ते विगलितरशनो बन्धनापेक्षोऽपि दृश्यमानस्तुरगो बन्धनेन कथं नान्वयं भजते। तत्र खल्वश्वस्य शब्दप्रतिपन्नत्वाभावादनन्वय इति बलाद् वक्तव्यम्। तथाच तद्वदेव प्रमाणान्तरप्रतिपन्नानामपि शब्दप्रतिपन्नत्वाभावादेवानन्वयः सिद्ध इति तत्रापि नास्माकं किञ्चिदधिकं कल्पनीयम्। तस्मादस्मदुक्त एवान्वयप्रकारो लघीयानिति।

**अत्राकाङ्क्षा च योग्यत्वं सन्निधिश्चेति तत् त्रयम्।**
**वाक्यार्थावगमैः सर्वैः कारणत्वेन कल्प्यते॥ ९४½॥**
**गौरश्वः पुरुषो हस्तीत्याकाङ्क्षारहितेष्विह।**
**अन्वयादर्शनात् तावदाकाङ्क्षा परिगृह्यते॥ ९५½॥**
**अग्निना सिञ्चतीत्यादावयोग्यानामनन्वयात्।**
**योग्यतापि परिग्राह्या सन्निधिस्त्वथ कथ्यते॥ ९६½॥**

शब्दैः सन्निहितत्वेन बोधितत्वं हि पदार्थानां सन्निधिरित्युच्यते। अतः सन्निहितत्वाभावाच्छब्दबोधितत्वाभावाच्च द्वेधा सन्निध्यभावो भवति। तत्र भिन्नकालोच्चारितयोर्गामानयेति पदयोः सन्निहितत्वाभावादनन्वयः। गां बधानेत्यत्र बन्धनापेक्षस्य दृश्यमानस्याश्वस्य शब्दबोधितत्वाभावादेवानन्वयः। अतः शाब्दप्रतिपन्नानामेवान्वय इति नियमः सिद्धः। गुरुस्तु बुद्धिस-

न्निधिमात्रमेव सान्निध्यं मन्यते, न तु शाब्दसन्निधिम् । सोऽपि गां बधानेत्यत्राश्वस्यान्वयं वारयितुमशक्नुवन् शाब्दानामेवान्वय इत्यकामेनाप्यनुमंस्यत इति प्रागुक्तम् । ननु तत्र वाक्यस्याश्वं प्रति तात्पर्याभावादेव तस्यानन्वयोऽस्तु, न शाब्दत्वाभावात् । मैवम् । तथा सत्यग्निना सिञ्चेदित्यादावपि तात्पर्याभावादेवानन्वय इति योग्यत्वादीनामप्यपरिग्रहप्रसङ्गात् ।

तस्मादन्वयसिद्धौ तात्पर्यं न स्वयं क्वचिद्धेतुः ।
सामग्र्यन्तरभावे नियमार्थं त्वर्थ्यते पुनस्तदपि ॥ ९७½ ॥

इति स्थितिः[1] ।

एवं गत्यन्तराभावाद् गुरुणापि समाश्रितः ।
शाब्दानामेव संसर्ग इत्ययं नियमोऽधुना ॥ ९८½ ॥
तेन द्वेधोपकारो नस्तत्रैकः पूर्वमीरितः ।
मानान्तरावबुद्धानां नान्वयः स्यादितीदृशः ॥ ९९½ ॥
अन्योऽपि द्वारमित्यादावध्याहारे भविष्यति ।
शाब्दस्यैवान्वयार्हत्वाद् द्वारमाव्रियतामिति ॥ १००½ ॥
शब्दाध्याहार एव स्यादित्येवं मादृशां मतम् ।
गुरुस्त्वावरणार्थस्य तत्राध्याहारमिच्छति ॥ १०१½ ॥
बुद्धिसन्निधिमात्रेणाप्यन्वेतीति दुराशया ।
तत्र यद्यचलितोऽयं गुरुर्नाद्यैव शिक्ष्यते ॥ १०२½ ॥
अर्थाध्याहृतिरेवेति तर्हि गर्जिष्यति ध्रुवम् ॥ १०३ ॥

---

१. 'तिः इति ।' ख. पाठः.

इत्यास्तामेतत् । उक्तस्तावद् वाक्यार्थज्ञानप्रकारः । असन्निकृष्टवाक्यार्थज्ञानं[1] च शाब्दमित्युक्तम् । इदमेवागम इति चोच्यते । असन्निकृष्टपदेन चानुवादानां बाधितार्थानां च वाक्यानामप्रामाण्यमुक्तम् । तच्च शाब्दं द्विविधं पौरुषेयमपौरुषेयं च । तत्राप्तवचः पौरुषेयं, वेदवचोऽपौरुषेयम् । गुरुस्त्वाह—वैदिकमेव शाब्दमस्ति । पुरुषवचनानि तु वक्त्रभिप्रायानुमापकान्येव, न स्वयमेव वाक्यार्थं बोधयन्ति, शङ्काकुण्ठितशक्तित्वात् । व्युत्पत्तिसमयसिद्धापि शब्दानां बोधकत्वशक्तिर्व्यभिचारबहुलेषु पौरुषेयवचनेषु तदाशङ्काशङ्कया कुण्ठिता भवति । तत्र चानेन वक्त्रामुमर्थमवबुध्यैव वाक्यं प्रयुक्तमिति यावन्नानुमीयते, तावदन्यथात्वशङ्का न निवर्तत इति वाक्यमुदास्त एव । तथा तात्पर्यमपि नरगिरां तद्बुद्ध्यधीनमिति वक्तृबुद्ध्यनुमानं विना तात्पर्यानिश्चयादपि वाक्यमुदास्ते । तस्माद् वक्तृधीस्तावदनुमातव्या । तत्र नद्यास्तीरे फलानि सन्तीति वाक्ये श्रुते पदार्थेषु च पृथक्[2] पृथक् स्मृतेष्वनुमिनोति 'एतानि पदान्येतेषां पदार्थानां संसर्गमवबुध्यैव प्रयुक्तानि आप्तप्रणीत[3]पदत्वाद् गामानयेति पदवदि'ति । एवञ्च वक्तुः पदार्थसंसर्गज्ञानमवगन्तुं परिश्रान्तः श्रोता पदार्थसंसर्गरूपं वाक्यार्थमपि बलाल्लभत इत्यनुमेय एव नरवचस्सु वाक्यार्थः ।

**एवं व्यभिचारभये गलिते [4]वाक्यार्थनिर्णये जाते ।**
**पुनरभिधत्ते शब्दोऽप्यनुवादतयेति तस्य राद्धान्तः ॥१०४॥**

---

१. 'नं शा' क. पाठः. २. 'क् स्मृ' ख. पाठः. ३. 'तत्वा' क. पाठः. ४. 'तात्पर्यनि' ख. पाठः.

तदिदमयुक्तम् ।

व्यभिचारविशङ्कामप्यनाद्दत्येन्द्रियादिवत् ।
स्वमर्थमभिधातुं किं समर्था न पदावली ॥ १०५ ॥
तात्पर्यमपि सुज्ञानं स्वतो ज्ञानानुमां विना ।
यथा वेदे यथा चान्येष्वनालोचितकर्तृषु ॥ १०६ ॥
वक्तृज्ञानानुमानान्तं यदि च प्रतिपाल्यते ।
तर्हि तस्याप्यशक्यत्वाद् भग्नाशः किं करिष्यसि ॥ १०७ ॥

आप्तप्रणीतत्वं खल्वत्र हेतुत्वेनोक्तम् । आप्तत्वं च भ्रान्त्याद्यभावोऽभिमतः । भ्रान्तिश्चास्य पुरुषस्य नास्त्येवेति क्वचिदपि न निरूपयितुं शक्यते । 'ऋषीणामपि भ्रान्तिराशङ्क्यते, किमङ्ग! पुनरर्वाचीनानामि'त्युक्तत्वात् । एवमस्मिन् देशे काले वास्य भ्रान्तिर्नास्तीत्यपि दुर्निरूपमेव । तस्मादन्ततोऽस्मिन् वाक्यार्थेऽस्य भ्रमो नास्तीति वाक्यार्थज्ञानपुरस्सरमेव भ्रान्तिर्निवारणीया । अतो वाक्यार्थावगमात् पूर्वमाप्तत्वमसिद्धमेवेति कथं तेनानुमीयत इति हतं गुरुमतम् ।

एवं लौकिकशब्दानामनुमानत्ववारणात् ।
सर्वशब्दानुमानत्ववादिनोऽपि हि खेदिताः ॥ १०८ ॥

द्विप्रमाणा हि काणादादयो गुरूक्तप्रकारेणैव सर्ववाक्यार्थानामनुमेयत्वमाहुः । तेऽप्यनेनैव निरसनीयाः । तैरपि निर्दोषवाक्यत्वादिहेतुभिरेव वाक्यार्थोऽनुमातव्यः । निर्दोषत्वं च

---

१. 'स्वार्थं बोधयितुं कस्मादसमर्था पदावली' क. पाठः.

भ्रान्त्यादिराहित्यम् । तच्च वाक्यार्थनिरूपणपुरस्सरमेव निरूपणीयमिति पूर्वोक्तप्रकारेण तेषामपि हेत्वसिद्धिरेवेत्यास्तां तावत् । तदेवं लौकिकं वैदिकमपि शाब्दं सिद्धम् । तत्र—

दुष्टवक्तृप्रणीतत्वदोषः शब्दे यदा भवेत् ।
तदा स्याद् व्यभिचारोऽपि पौरुषेयगिरां क्वचित् ॥ १०९ ॥
अपौरुषेये वेदे तु पुरुषस्पर्शसङ्गतः ।
कलङ्को न विशङ्क्येत तत् कुतो व्यभिचारिता ॥ ११० ॥

वैदिकं च विधिमन्त्रार्थवादभेदेनोपदेशातिदेशभेदेन च बहुविधमित्यादि तु परिमितकथया न बोधयितुं शक्यत इत्युपरम्यते ।

इति मानमेयोदये

प्रमाणपरिच्छेदे शाब्दपरीक्षा ।

---

अथोपमानपरीक्षा ।

दृश्यमानार्थसादृश्यात् स्मर्यमाणार्थगोचरम् ।
असन्निकृष्टसादृश्यज्ञानं ह्युपमितिर्मता ॥ १११ ॥

यथा गवये गोसादृश्यदर्शनानन्तरं स्मर्यमाणे गवि गवयसादृश्यज्ञानम् । तथाहि—

नगरे खलु पूर्वं गां पश्यतोऽपि न भासते ।
तत्स्थं गवयसादृश्यं गवयस्यानिरीक्षणात् ॥ ११२ ॥

कदाचित् तु वनं प्राप्य गवयं वीक्षते यदा ।
तदा तद्गतगोसाम्यं प्रत्यक्षेणैव गृह्यताम् ॥ ११३ ॥

यत् पुनस्तावदेवास्य भाति दूरस्थिते गवि ।
गवयेनापि सादृश्यं तत्र किं नाम कारणम् ॥ ११४ ॥

न हि पूर्वगृहीतं तद् येन स्मर्येत साम्प्रतम् ।
दूरस्थितत्वाच्चेदानीं प्रत्यक्षेण न गृह्यते ॥ ११५ ॥

स्पष्टं च भासते तस्मात् प्रमाणान्तरमर्थ्यते ।
तत्रोपमानमाचख्युः शाबराः शाङ्करा अपि ॥ ११६ ॥

तत्र च—

गवयस्थितसादृश्यदर्शनं करणं भवेत् ।
फलं गोगतसादृश्यज्ञानमित्यवगम्यताम् ॥ ११७ ॥

तार्किकास्तु उपमानमन्यादृशमन्वेषयन्तो गोगतसादृश्यज्ञानमनुमानीकुर्वन्ति । यथा — यो यद्गतसादृश्यप्रतियोगी स तेनापि सदृशः, यथा करतलं करतलान्तरेण । गवयगतसादृश्यप्रतियोगी च गौः । तस्माद् गवयेनापि सदृश इति । तदयुक्तम् । इह हि यो यद्गतसादृश्यप्रतियोगी, स तेनापि सदृश इति सामान्यव्याप्तिमात्रेणानुमीयमाने यःकश्चिदग्निरस्तीतिवदनियतविशेषं यत्किञ्चित् सादृश्यमस्तीत्येतावदेव भासते, न तु नियतमेव गोर्गवयसादृश्यं प्रत्यक्षवदेव विस्पष्टं परिच्छिद्येत । तस्मान्नियतपरिच्छेददर्शनान्न सामान्यतोदृष्टानुमानमि-

1. 'सामान्यम' ख. पाठः.

दम् । अतोऽनुमानाभावान्मानान्तरमेव । ननु तदानीमेव गोर्गवयसाधर्म्यवत् पुरुषादेर्गवयवैधर्म्यमपि स्पष्टं प्रतिभासते । तत्रापि किं प्रमाणान्तरमाश्रीयते । नेति ब्रूमः । तत्र खलु पुरुषस्य गवयगतधर्माभावरूपं वैधर्म्यमभावप्रमाणेनैवावगम्यत इति किं प्रमाणान्तरेणेति । तार्किकैस्तूपमानमन्यदुन्नीतम् । कश्चित् खलु नगरागतं वनचरं प्रति गवयो नाम क इति पृष्ट्वा गोसदृशो गवय इति श्रुतातिदेशवाक्यः पुनर्वनमुपेत्य मृगविशेषं पश्यन् अयमेव स गोसदृश इति प्रत्यभिजानाति । ततश्चायमेव गवय इति संज्ञासंज्ञिसङ्गतिमपि जानाति । तदिदं सङ्गतिग्रहणमुपमितिः[1] । तत्करणं वाक्यार्थप्रत्यभिज्ञानमुपमानमिति । न चेदं सङ्गतिग्रहणं प्रमाणान्तरसाध्यम् । पूर्वं वाक्यश्रवणसमये हि संज्ञिनो गवयस्यादृष्टत्वात् तत्र सम्बन्धग्रहो न शक्यते कर्तुम् । दृश्यमाने तु गवये वाक्यमतिवृत्तमेवेति न वाक्यस्य तद्बोधने प्रागल्भ्यम् । ननु गोसदृशे पिण्डे गवयशब्दः प्रयुज्यत इति तावद् वाक्यादवगतम् । तेन दृश्यमानेन गवयेऽनुमीयतां 'गवयशब्दोऽस्य वाचकः लक्षणादीन् विनात्र प्रयुज्यमानत्वाद् यथा गोर्गोशब्द' इति । तदप्ययुक्तम् । तत्र प्रयुज्यमानत्वमात्रमेव हि वाक्यादवगतम् । लक्षणाद्यभावस्तु वाचकत्वसिद्धेः पूर्वं दुर्विज्ञान एवेति विशेषणासिद्धोऽयं हेतुः । तस्मादुपमानसाध्यमेवेदं सम्बन्धज्ञानम् ।

---

१. 'ति स्थितिः । न' ख. पाठः.

साधर्म्यवाक्यार्थादुपमानं समीरितम् ॥ ११८ ॥

ेव हि वैधर्म्याद् धर्ममात्राच्च सम्भवेत् ।
तुरङ्ग इत्येष द्विशफो न गवादिवत् ॥ ११९ ॥

वैधर्म्यवाक्यार्थं बुद्ध्वा देशान्तरं गतः ।
मेकशफं दृष्ट्वा तुरङ्ग इति बुध्यते ॥ १२० ॥

। धर्ममात्रे च श्रुते सम्बन्धधीः क्वचित् ।
ग्रीवः प्रलम्बोष्ठः कण्टकाशी क्रमेलकः ॥ १२१ ॥

श्रुत्वा ततोऽन्यत्र विजानन्ति क्रमेलकम् ।
साधर्म्यवैधर्म्यधर्ममात्रविभेदतः ॥ १२२ ॥
तिदेशवाक्यार्थस्तस्मादुपमितिस्त्रिधा ॥ १२२½ ॥

दं दुर्मतं हेयं यतः सम्बन्धधीरियम् ।
क्षानुगृहीतेन शाब्देनैवोपजन्यते ॥ १२३½ ॥

को गवय इति गवयशब्दवाच्यार्थं पृष्टवता हि पुरुषेण शो गवय इत्युत्तरवाक्यस्यापि वाच्यार्थप्रदर्शन एव तात्यवधार्यते ।

ाप्रदर्श्य वाच्यार्थं न शब्दः पर्यवस्यति ।
ं च गवयज्ञानान्न शक्यं तत्प्रदर्शनम् ॥ १२४½ ॥

ततश्चानवगततात्पर्यमपर्यवसितमेव वाक्यं पुनर्गवये प्र-

. 'न्दस्य वा' ख. पाठः.

त्यक्षीक्रियमाणे स्मृतिगतं प्रत्यक्षोपदर्शितवाच्यार्थतया प्रतिलब्ध-तात्पर्यं तदानीमेव संज्ञासंज्ञिसम्बन्धस्यावबोधकं भवति । यथा खलु नवकम्बलो वणिगिति भणितिनिशमनमनु विपणिमुपगतो वणिजि नवसु कम्बलेषु दृश्यमानेषु सङ्ख्याविशेषतात्पर्यमवधार्य वाक्यार्थं बुध्यते, तथात्रापि द्रष्टव्यम् । तस्मात् प्रत्यक्षानुगृहीत-शाब्दसाध्यमेव सङ्गतिग्रहणमिति न प्रमाणान्तरमन्वेषणीयम् । किञ्च,

उपमानपदं लोके सादृश्ये सति विश्रुतम् ।
वैधर्म्ये धर्ममात्रे च तत्प्रयोगः कथं हि वः ॥ १२५½ ॥

तथातिदेशशब्दोऽपि वाक्ये साधर्म्यबोधके ।
प्रसिद्धः सोऽपि चान्यत्र कथ्यमानो दुनोति माम् ॥१२६½॥

इति ।

तस्मादनितरशरणं गोगतसादृश्यबोधमेव वयम् ।
उपमानं गृह्णीमो मानत्रयवादिनोऽपि तेन जिताः ॥१२७½॥

अत्र सादृश्यविषये गुरुणा कलहोऽस्ति नः ।
पदार्थान्तरमेवेदं सादृश्यं मन्यते गुरुः ॥ १२८½ ॥

वयं गुणादिसामान्यसमाहारं †वदामहे ।
पदार्थावसरे किञ्चित् तत्प्रकारो वदिष्यते ॥ १२९½ ॥

इति मानमेयोदये
प्रमाणपरिच्छेदे उपमानपरीक्षा ।

---

† 'भासनोपसंभाषा —' (१. ३. ४७.) इति सूत्रेणात्मनेपद

## अथार्थापत्तिपरीक्षा ।

अन्यथानुपपत्त्या यदुपपादककल्पनम् ।
तदर्थापत्तिरित्येव लक्षणं भाष्यभाषितम् ॥ १३०½ ॥

तत्र च प्रमाणद्वयविरोधोऽनुपपत्तिरित्युच्यते । तेनैवं लक्षणं शिक्षणीयं —

साधारणप्रमाणानामसाधारणमानतः ।
विरोधादविरुद्धांशे धीरर्थापत्तिरिष्यते ॥ १३१½ ॥

यथा जीवनमानस्य गृहाभावप्रमाणतः ।
विरोधात् करणीभूताद् बहिर्भावस्य कल्पनम् ॥ १३२½ ॥

गणितागममूलेनानुमानेन देवदत्तो गृहे बहिर्वा क्वचिज्जीवतीति साधारण्येनावगम्यते । तस्य गृहे नास्तीत्यनेन विरोधे सत्यविरोधाय बहिरस्तीति कल्प्यते । तदिदं प्रमाणद्वयविरोधकर्णकमर्थापत्तिज्ञानमिति ।

अमुष्यास्त्वनुमानत्वमिच्छन्तस्तार्किका जगुः ।
न मानयोर्विरोधोऽस्ति प्रसिद्धे चाप्यसौ समः ॥ १३३½ ॥

इति । प्रमाणयोस्तावद् विरोधो न सम्भवति । इदं रजतं नेदं रजतमितिवदेकस्याप्रमाणत्वप्रसङ्गात् । ननु तथाप्युक्तप्रमाणयोर्विरोधो दृश्यत इति चेत्, तदप्याशामात्रम् । अत्र हि गृहे बहिर्वेति सन्देहास्पदस्यैव देशविशेषस्य गृहाभावप्रमाणेन बाधो

---

१. 'णम' क. पाठः.

जातः । जीवनप्रमाणेन हि जीवनमात्रं देशसामान्यसम्बन्धो वा विषयीकृतः, न तु तदुभयमपि गृहाभावप्रमाणेन स्पृष्टमाघ्रातं वा । तस्माज्जीवनगृहाभावप्रमाणयोर्विरोधस्यैवाभावात् कथं तेन करणभूतेनार्थापत्तिरित्युच्यते । अपिच,

**ईदृशस्य विरोधस्य प्रसिद्धानुमितिष्वपि ।**
**सम्भवादनुमाजालमर्थापत्तिर्ग्रसिष्यते ॥ १३४½ ॥**

यत्र धूमस्तत्राग्निरिति व्याप्तिग्राहकप्रमाणेन हि पर्वतेऽप्यग्निः प्राप्तः । धूमो वा दृश्यमानः पर्वते स्वकारणमग्निमाक्षिपतीति व्याप्तिग्राहकप्रमाणेन धूमदर्शनेन वा पर्वते क्वचिदग्निरस्तीत्यवगतम् । तस्य चोर्ध्वदेशेऽनुपलम्भेन विरोधादधोदेशे वह्निः कल्प्यत इत्यर्थापत्तितापत्तिः । तस्मादियमनुमानपक्षे प्रक्षेप्तव्या।[1] इत्थं चानुमीयते—देवदत्तो बहिरस्ति जीवत्त्वे सति गृहेऽसत्त्वाद् यो जीवन् यत्र नास्ति स ततोऽन्यत्रास्ति यथाहमिति। अतो वञ्चितमेतत् पञ्चमप्रमाणमिति ।

**तदिदं शिक्ष्यतेऽस्माभिर्विरोधोऽस्त्येव मानयोः ।**
**न प्रसिद्धानुमाभङ्गो बहिर्भावे च नानुमा ॥ १३५½ ॥**

तत्र यत् तावदुक्तं प्रमाणयोर्विरोधे सत्येकस्याप्रमाणत्वं स्यादिति, तद् इदं रजतं नेदं रजतमितिवदुभयोरप्यसाधारणप्रमाणयोर्विरोध एव ।

---

१. 'हाभावात्' क. पाठः.

साधारणप्रमाणस्य त्वसाधारणमानतः ।
बाधेऽपि सावकाशत्वादप्रामाण्यं न जायते ॥ १३६½ ॥

तस्मात् प्रमाणद्वयविरोधः सम्भवत्येव । यत् पुनरुक्तमिहापि सन्दिग्धस्य[1] देशविशेषस्यैव बाधो न जीवनप्रमाणस्येति । अत्र[2] ब्रूमः ।

ज्ञायमानेऽनुमानेन देवदत्तस्य जीवने ।
ज्ञातव्यो देशसम्बन्धोऽप्यस्यावस्थितिसिद्धये ॥ १३७½ ॥

तत्र देशत्वसामान्यमात्रं सम्बध्यते यदि ।
तर्हि देशत्वसम्बन्धाद् देशः स्यात् पुरुषोऽप्यसौ ॥१३८½॥

ततश्चानियतव्यक्तिदेशसामान्यसंश्रितम् ।
ज्ञायते जीवनं तस्य क्वचिज्जीवत्यसाविति ॥ १३९½ ॥

तस्माद् गृहे बहिर्वेति सन्दिग्धमपि कञ्चन ।
विशेषमवलम्ब्यैव प्रमितं खलु जीवनम् ॥ १४०½ ॥

तत्रैकस्य विशेषस्य बाधेऽन्यग्रहणात् पुरा ।
बाध्येतैव निरालम्बा जीवनप्रमितिः स्वयम् ॥ १४१½ ॥

एवं बहिष्ट्वसिद्धेः प्राग् गृहाभावग्रहागताम् ।
प्रतिरोधदशां सूक्ष्मामविदन्तो वदन्ति ते ॥ १४२½ ॥

इति । यदप्युक्तं प्रसिद्धानुमानानामप्यर्थापत्तित्वं स्यादिति, तदपि न । तत्र हि पर्वतस्य क्वचिदग्निप्रापकं साधारणप्रमाणं

---

१. 'स्य वि' ख. पाठः. २. 'त' ख. पाठः.

किन्नामेति वक्तव्यम् । ननूक्तं व्याप्तिग्राहकप्रमाणेन पर्वतेऽप्यग्निः प्राप्त इति । हन्त भोः ! प्राभाकरपृष्ठचुम्बिना केनेदं प्रलपितम् ।

अदृष्टपर्वतः पूर्वं कथं तस्याग्निशालिताम् ।
अवगच्छेदिति ध्वस्तमनुमानेऽपि तन्मतम् ॥ १४३½ ॥

यत् पुनरुक्तं धूमः स्वकारणमग्निमाक्षिपतीति तस्य कोऽर्थः । हन्त धूमोऽग्निमनुमापयतीति व्याख्यातव्यम् । ततश्च पर्वतेऽग्निप्रापकमनुमानमेव तत्र[1] साधारणप्रमाणतयोक्तमिति नास्त्यनुमानकबलीकारः ।

तस्योर्ध्वानुपलम्भेन बाधे चाधः प्रकल्पनम् ।
अर्थापत्तितयैवेष्टमिति कष्टं न किञ्चन ॥ १४४½ ॥

इति । यत् पुनरनुमानं बहिर्भावसिद्धौ प्रयुक्तं, तत् स्वरूपासिद्धमायुष्मताम् । जीवनमात्रस्य निर्विशेषस्य निरूपयितुमशक्यत्वात् । बहिर्भावग्रहणात् पूर्वं जीवनगृहाभावौ समुच्चित्य प्रत्येतुं न शक्येते । अतो जीवनविशिष्टगृहाभावरूपस्य लिङ्गस्याप्रतिपत्तेः स्वरूपाज्ञानासिद्धोऽयं हेतुः । तदुक्तं बृहट्टीकायां—

"तस्माद् यो विद्यमानस्य गृहाभावोऽवगम्यते ।
स हेतुः स बहिर्भावं नागृहीत्वा च गृह्यते ॥"

इति । अतः पृथगेवार्थापत्तिः ।

तार्किकध्वंसनोपायमेतादृशमजानता ।
गुरुणा तु प्रलपितो जीवनस्यात्र संशयः ॥ १४५½ ॥

---

१. 'प्राप्ता' क. पाठः.

जीवनं किल विज्ञातं वेश्मवर्तितया पुरा ।
तस्माज्जीवनसन्देहो भवेद् वेश्मन्यदर्शनात् ॥ १४६½ ॥

सन्दिग्धं जीवनं त्वेतद् बहिर्भावस्य बोधकम् ।
अर्थापत्तेः प्रभावोऽयं यत् सन्दिग्धोऽपि बोधयेत् ॥१४७½॥

एवं जीवनसन्देहे स्यात् सन्दिग्धविशेषणः ।
हेतुरित्यनुमानत्वनिरासः सुकरोऽत्र नः ॥ १४८½ ॥

इति । तदिदमपहसनीयम् । तथाहि—

जीवनं यदि सन्दिग्धं गृहाभावनिरीक्षणात् ।
तर्हि तन्निर्णयः कार्य आप्तवाक्यादिना पुनः ॥ १४९½ ॥

तत्प्रियाकण्ठसूत्रादिचिह्नसन्दर्शनेन वा ।
न च तत्* प्रार्थ्यते किञ्चित् तस्मान्नास्त्येव संशयः ॥१५०½॥

किञ्च नास्ति बहिर्भावग्रहः सन्दिग्धजीवनात् ।
मृतत्वस्यापि शङ्कायां बहिरस्तीति धीः कथम् ॥ १५१½ ॥

यस्माज्जीवति वा नो वा तस्मात् तिष्ठत्यसौ बहिः ।
इति कल्पयितुं शक्तः कोऽपरो गुरुणा विना ॥ १५२½ ॥

अर्थापत्तिप्रभावेण सर्वं सम्भवतीति चेत् ।
हन्तैवं सर्ववस्तूनामदृष्ट्या नाशसंशये ॥ १५३½ ॥

अन्यत्रास्तीति निश्चित्य कृतार्थीक्रियतां मनः ।
तस्मात् सन्दिग्धता तावन्नैवार्थापत्तिकारणम् ॥ १५४½ ॥

---

* आप्तवाक्यादिकम् ।

इति । अतोऽस्मदुक्तविधैवार्थापत्तिः । सा पुनर्द्वयी दृष्टार्थापत्तिः श्रुतार्थापत्तिश्चेति । तत्र दृष्टार्थापत्तिरुक्ता ।

**यत्र त्वपरिपूर्णस्य वाक्यस्यान्वयासिद्धये ।**
**शब्दोऽध्याह्रियते तत्र श्रुतार्थापत्तिरिष्यते ॥ १५५½ ॥**

यथा द्वारं द्वारमित्यस्मिन् वाक्येऽन्वयसिद्ध्यर्थं शब्दगम्येनावरणाद्यर्थान्तरेण भवितव्यमिति साधारणप्रमाणम् । तस्य श्रुतशब्दानुपलम्भेन बाधे सत्यश्रुतशब्दगम्यत्वेनावरणाद्यर्थः कल्पनीयः । तत्र च शब्देन सहैवावरणाद्यर्थकल्पनोद्युक्तः शब्दादेवार्थगतेर्लाघवतः शब्दमेव कल्पयति । सेयं शब्दकल्पनरूपा श्रुतार्थापत्तिः । गुरुस्तु आवरणाद्यर्थस्यैव कल्प्यतया शब्दकल्पनाभावाच्छ्रुतार्थापत्तिर्नास्तीत्याह । स तु शब्दप्रतिपन्नस्यैवान्वयसाधनात् पूर्वमेव मूकीकृतः । किञ्च यदि वाक्यपूरणार्थमर्थ एव कल्प्यते, तर्हि 'सूर्याय जुष्टं निर्वपामी'त्यादा सूर्यरूपोऽर्थ एवोहितव्यः, न तु सूर्यायेति पदकल्पनं स्यात् । ननु प्रकृतौ पदार्पित एवायमंशो दृष्ट इति विकृतावपि पदं कल्प्यम् । मैवम् । न हि दृष्टत्वमात्रेण विकृतौ धर्मा आकृष्यन्ते, किन्तु प्रयोजनायैव । न तु तस्यांशस्य पदबोधितत्वेन युष्माकं किञ्चित् प्रयोजनमस्ति, अन्वयस्यान्यथापि सिद्धत्वात् । दृष्टत्वमात्रेण ग्रहणे चावहतगतमेव संस्कारान्तरं दृष्टमित्यवघातोऽपि कृष्णलेषु

१. 'घमा' क. पाठः. २. 'धा दृष्टत्वा' क. पाठः.

कर्तव्यः स्यात् । तस्माच्छ्रुतार्थापत्त्यैवोहसिद्धिरित्यास्तामेतदिति ।

इति मानमेयोदये

प्रमाणपरिच्छेदेऽर्थापत्तिपरीक्षा ।

---

अथाभावपरीक्षा ।

अथोपलम्भयोग्यत्वे सत्यप्यनुपलम्भनम् ।
अभावाख्यं प्रमाणं स्यादभावस्यावबोधकम् ॥ १५६½ ॥

अत्र ह्यनुपलम्भः करणम् । तस्य च ज्ञानाभावरूपत्वादभावः प्रमाणमित्युच्यते । तत्र च—

विषयं तदधीनांश्च सन्निकर्षादिकान् विना ।
उपलम्भस्य सामग्रीसम्पत्तिः खलु योग्यता ॥ १५७½ ॥
सा च ज्ञाततयाभावज्ञानस्य सहकारिणी ।
अज्ञातोऽनुपलम्भस्तु सत्तामात्रेण बोधकः ॥ १५८½ ॥

ततश्च विषयभूतं घटं, तदधीनांश्चेन्द्रियसन्निकर्षादीन् विना यच्चक्षुरुन्मीलनालोकसम्पातमनःप्रणिधानादिकं घटोपलम्भकारणं, तत् सर्वमिदानीमेव[1] सञ्जातमित्यवगमे सति तत्सहकृतः सन् घटानुपलम्भो घटाभावं बोधयतीत्येवं सर्वत्र द्रष्टव्यम् ।

योग्यत्वावगमार्थं[2] हि सूक्ष्मार्थाभाववेदने ।
सूक्ष्मबोधकनेत्रांशुसम्पातार्थं प्रयस्यते ॥ १५९½ ॥

---

१. 'मत्र स' ख. पाठः. २. 'धि' ख. पाठः.

**योग्यत्वस्य च सन्देहे विपर्यासेऽथवा सति ।**
**अभावेऽपि हि सन्देहो भ्रमो वास्त्येव तद् यथा ॥१६०½॥**
**तमसि भ्रष्टमन्विष्यन् कराभ्यामङ्गुलीयकम् ।**
**सर्वोर्वीस्पर्शसन्देहादभावेऽप्येति संशयम् ॥ १६१½ ॥**
**तथैव सर्वतोऽस्पर्शे मत्वा सर्वाभिमर्शनम् ।**
**सत एवाङ्गुलीयस्याप्यभावं[1] बुध्यते भ्रमात् ॥ १६२½ ॥**

तस्माद् योग्यत्वनिर्णयोऽत्र सहकारी । अनुपलम्भस्तु द्विविधः प्रमाणाभावरूपः स्मरणाभावरूपश्च । तत्र प्रत्यक्षप्रमाणाभावरूपादनुपलम्भाद् घटाद्यभावज्ञानमुक्तम् । एवमनुमानगम्यार्थानामभावग्रहणे योग्यानुमानानुदयो बोधको द्रष्टव्यः । यथा रूपदर्शनबोधकस्य चेष्टालिङ्गकानुमानस्यानुत्पत्तिरुलूकस्य दिवा रूपदर्शनाभावं बोधयतीत्युक्तं मनोरथमिश्रैः । एवमन्ये[2]प्रमाणेष्वपीति । स्मरणाभावाद् यथा — प्रातरिह मैत्रो नासीदिति सायङ्काले ज्ञानम् । तत्र हि प्रातःकालविशिष्टमैत्रस्य सायङ्काले दर्शनयोग्यत्वाभावात् स्मरणयोग्यत्वे सत्यस्मरणमेव तदानीं प्रातःकालविशिष्टमैत्राभावस्य बोधकमा[3]श्रीयते[4] इति । तार्किकास्तु — अभावस्य प्रत्यक्षादिगम्यत्वमाचक्षाणा अनुपलम्भगम्यतां नसम्मन्यन्ते । तदयुक्तम् । तेऽपि हि सायङ्काले प्रातःकालीनाभावज्ञानस्येन्द्रियजन्यत्वाभावादुक्तप्रकारेणानुपलम्भजत्वमेव बलादङ्गीकुर्वीरन् । ननु तत्र स्मरणाभावेन लिङ्गेन प्रातःकालीना-

---

१. 'वं मन्यते' क. पाठः. २. 'न्यत्र प्र' क. पाठः. ३. 'मित्याश्री' क. पाठः. ४. 'ते । ता' क. पाठः.

भावोऽनुमीयत एव । मैवम् । स्मरणाभावस्य ज्ञातुमशक्यत्वात् ।

स्मृत्यभावं मनोग्राह्यमिच्छन्ति किल तार्किकाः ।
तच्चायुक्तं वयं तावद् ज्ञानाप्रत्यक्षवादिनः ॥ १६३½ ॥
मनःप्रत्यक्षगम्यत्वं ज्ञानानां वारयामहे ।
ततश्च तदभावोऽपि मनसा गृह्यते कथम् ॥ १६४½ ॥

इति । नन्वभावस्य प्रत्यक्षत्वमनुमिमीमहे । तदिदमुदितमुदयनेन—

"प्रतिपत्तेरापरोक्ष्यादिन्द्रियस्यानुपक्षयात् ।
अज्ञातकरणत्वाच्च भावावेशाच्च चेतसः ॥"

इत्यादि । प्रयोगस्तु—अभावः प्रत्यक्षः अपरोक्षप्रतीतत्वाद् घटवदिति । तत्राभावस्यापरोक्षप्रतीतत्वाभावात् स्वरूपासिद्धो हेतुः । भूतलादेस्त्वपरोक्षत्वादभावस्यापि तत्त्वभ्रम एवायुष्मतामिति । नन्वभावज्ञानं प्रत्यक्षम् अनुपक्षीणेन्द्रियजन्यत्वाद् घटज्ञानवदिति । तदपि विशेषासिद्धम्* । यतः—

पूर्वोक्तयोग्यतासिद्धावुपक्षीणमिहेन्द्रियम् ।
ग्राह्या चाभावबोधार्थं योग्यता तार्किकैरपि ॥ १६५½ ॥
घटो यदि भवेदत्र तर्हि दृश्येत भूमिवत् ।
इति तर्कात्मना तेऽपि योग्यतामेव गृह्णते ॥ १६६½ ॥
अस्ति चेदुपलभ्येतेत्यस्य कोऽर्थो विचार्यताम् ।
घटादन्योऽत्र सर्वोऽपि ज्ञानहेतुरभूदिति ॥ १६७½ ॥

---

* विशेषो विशेषणम् ।

यत् पुनः अभावज्ञानं प्रत्यक्षम् अज्ञातकारणत्वाद् घटादिज्ञानवदिति, तत् स्मृतावनैकान्तिकम् ।

**संस्कारो हि स्मृतौ हेतुः स चाज्ञातोऽवबोधकः ।**
**अज्ञातकरणाप्येवं स्मृतिर्नाध्यक्षतां गता ॥ १६८½ ॥**

इति । यत् पुनः अभावज्ञानं भावरूपकरणाविष्टमनोजन्यं ज्ञानत्वाद् ज्ञानान्तरवादित्यनुपलम्भकरणत्वं न युक्तमिति, तदपि न । अभावज्ञानमिन्द्रियेतरकरणकम् अभावज्ञानत्वाद् अनुमेयाभावज्ञानवदि[1]त्यपि वक्तुं शक्यत्वादिति । यत्तु अभावज्ञानमिन्द्रियकरणकम् इन्द्रियदोषेण दूष्यमाणत्वाद् यथा चक्षुर्दोषेण दूष्यमाणं रूपज्ञानं चक्षुःकरणकमिति, तद[2]प्यसिद्धमेव ।

**न खल्विन्द्रियदोषः स्याद्भावभ्रमकारणम् ।**
**योग्यताभ्रम एवात्र तत्कारणमितीरितम् ॥ १६९½ ॥**

इति । यानि पुनः चक्षुरभावग्राहकम् इन्द्रियत्वाद् मनोवदित्यादीन्यन्यान्यप्यनुमानानि, तानि सर्वाणि[3] सम्बद्धस्यैवेन्द्रियस्य ग्राहकत्वादभावेन[4] सम्बन्धानभ्युपगमाद्[5] विशेषणविशेष्य(भाव)रूपसम्बन्धस्य च सम्बन्धान्तरपूर्वकत्वनियमाद् विशेषविरुद्धानि ।

**अपि चेन्द्रियसम्बन्धयोग्यतैव हि वस्तुनः ।**
**प्रत्यक्षत्व उपाधिः स्याद् व्याप्त्यासिद्धास्ततोऽखिलाः ॥१७०½॥**

---

१. 'ति प्रतिहेतुविरुद्धत्वा' क. पाठः. २. 'दसि' ख. पाठः. ३. 'ण्यपि स' ख. पाठः. ४. 'न च स' ख. पाठः. ५. 'माद् विशेषविरु' ख. पाठः.

ननु विशेषणविशेष्यभावो नाम सम्बन्धोऽस्त्येव । मैवम् ।

**प्रत्यक्षत्वे ह्यभावस्य स्थिते कश्चित् कथञ्चन ।**
**कष्टोऽपि सन्निकर्षः स्यात् तदेवाद्यापि न स्थितम् ॥१७१½॥**

किञ्च अभावभूतले विशेषणविशेष्यभावरहिते सम्बन्धान्तररहितत्वाद् मेरुविन्ध्यवदिति विशेषणविशेष्यत्वमेवात्र नास्तीति कथमसतः सन्निकर्षत्ववादः । किञ्च,

**प्रतियोगिस्मृतिर्न स्याद्यादितो निर्विकल्पके ।**
**ततश्च सविकल्पेनैवाभावज्ञानमिच्छसि ॥ १७२½ ॥**

तस्मादेवमनुमीयते — अभावः प्रत्यक्षो न भवति निर्विकल्पकानर्हत्वाद् अतीन्द्रियवस्तुवदिति । तदेवं नैयायिकवैयात्यनिरोधादनुपलम्भवेद्य एवाभाव इति स्थितम् ।

**अभावाख्यं तु वस्त्वेव नास्तीत्याह प्रभाकरः ।**
**तेन प्रमाणचिन्तासेवैनां परिहसत्यसौ ॥ १७३½ ॥**

**तमप्यपाकरिष्यामः पदार्थानां समर्थने ।**
**तदेवं निष्प्रतिद्वन्द्वा षट्प्रमाणी समर्थिता ॥ १७४½ ॥**

**ये* तु सम्भवमैतिह्यमिति मानान्तरं विदुः ।**
**तेऽनुमाने च शाब्दे च चोरवृत्तिमुपाश्रिताः ॥ १७५½ ॥**

तथाहि—

---

१. 'षत्रि' ख. पाठः.

---

* पौराणिकाः ।

यत् सहस्रादिसंख्यासु शतादेः सत्त्ववेदनम् ।
खार्यादिपरिमाणेषु प्रस्थादिग्रहणं च यत् ॥ १७६½ ॥

तत् सम्भव इति प्राहुरन्तर्भावो हि सम्भवः ।
तच्चानुमानिकं ज्ञानमिच्छन्ति स्वच्छचेतसः ॥ १७७½ ॥

एकस्य तावद् द्वित्वादौ समावेशानिरीक्षणात् ।
ज्ञायतेऽधिकसंख्यायामल्पसंख्यासमन्वयः ॥ १७८½ ॥

ततश्च व्याप्तिविज्ञानादल्पसंख्याः शतादयः ।
सहस्रादिषु गम्येरन्नाधिकत्वेन हेतुना ॥ १७९½ ॥

तथैव परिमाणेष्वप्यधिकादल्पवेदनम् ।
ऊह्यमित्यनुमानत्वसम्भवात् सम्भवो हतः ॥ १८०½ ॥

प्रवादमात्रशरणं वाक्यमैतिह्यमुच्यते ।
वटे वटे वैश्रवणस्तिष्ठतीत्यादिकं यथा ॥ १८१½ ॥

तत् प्रायो मूलराहित्यादप्रमाणतयेष्यते ।
नन्वेवं कृष्णरामादिकथापि हि कथं हि वः ॥ १८२½ ॥

मैवं स्मृतिवदाप्तोक्तिप्रसिद्ध्या मूलसम्भवात् ।
मानान्तराविरोधाच्च शाब्दमेव हि तादृशम् ॥ १८३½ ॥

किञ्च कृष्णादिवृत्तान्तसाधुता साधु साधिता ।
न्यायनिर्णयकारेण पुरुषोत्कर्षसाधने ॥ १८४½ ॥

---

१. 'सत्यता' ख. पाठः.

तस्मात् कुत्रचिदैतिह्यं सत्यं चेच्छाब्दमेव तत् ।
अतः षडेव मानानि मानयन्ति मनीषिणः ॥ १८५½ ॥

"राम! षड् युक्तयो लोके याभिः सर्वोऽनुदृश्यते" ।†
इति रामायणेऽप्युक्तं तस्मात् सर्वं सुमङ्गलम् ॥ १८६½ ॥

इति श्रीनारायणभट्टप्रणीते मानमेयोदये

प्रमाणपरिच्छेदेऽभावपरीक्षा ।

समाप्तश्च प्रमाणपरिच्छेदः ।

---

† आरण्यकाण्डे सर्गः ७२, श्लोकः ८.

अथ

श्रीनारायणप्रणीतः

# प्रमेयपरिच्छेदः ।

## द्रव्यनिर्णयः ।

कुमारिलवचोजालपयोधिशरदिन्दवे ।
शिष्यसन्तानसन्तानतरवे गुरवे नमः ॥ १ ॥
यत्कीर्तिर्न हि माति हन्त महति ब्रह्माण्डभाण्डोदरे
यस्याज्ञां प्रणतैः शिरोभिरनिशं धत्ते नृपाणां गणः ।
सोऽयं नाटकतर्ककाव्यनिपुणः प्रज्ञातपातञ्जलो
भक्तश्चक्रिणि मानवेदनृपतिर्जागर्ति पृथ्वीतटे ॥ २ ॥
पृथ्वीवृत्रजिता नितान्तमहितेनैतेन सञ्चोदितै-
रस्माभिः कृशशेमुषीविलसितैरभ्यासहीनैरपि ।
प्राङ् नारायणसूरिणा विरचितं तन्मानमेयोदयं
मोहात् पूरयितुं कृता मतिरियं सन्तः प्रसीदन्तु नः ॥
प्रमेयं बहुधा लोके प्राहुः प्राभाकरादयः ।
प्रमाणाभासविश्वासव्याकुलीभूतचेतसः ॥ ४ ॥
आचार्यमतपीयूषपारावारविहारिणः ।
वयं तावत् प्रमेयं तु द्रव्यजातिगुणक्रियाः ॥ ५ ॥
अभावश्चेति पञ्चैतान् पदार्थानाद्रियामहे ।
परिमाणगुणाधारं द्रव्यं द्रव्यविदो विदुः ॥ ६ ॥

पृथिवी सलिलं तेजः पवमानस्तमस्तथा ।
व्योमकालदिगात्मानो मनः शब्द इति क्रमात् ॥ ७ ॥
एकादशविधं चैतत् कुमारिलमते मतम् ।
यथाशास्त्रं विधास्यामस्तत्स्वरूपनिरूपणम् ॥ ८ ॥

तत्र तावद् गन्धवती पृथिवी । सा पुनर्धराधरमहीरुहादिरूपा शरीरघ्राणेन्द्रियरूपा च । स्वाभाविकद्रवत्वाधिकरणं सलिलम् । तत्तु सरस्सरित्सरस्वत्करकादिरूपं रसनेन्द्रियरूपं च । उष्णस्पर्शगुणं तेजः । तत् पुनरर्कचन्द्राग्निनक्षत्रसुवर्णादिरूपं नयनेन्द्रियरूपं च । तस्य पुनरुद्भूतानुद्भूताभिभूतभेदे(न) त्रिविधौ रूपस्पर्शौ । तत्रोद्भूतरूपस्पर्शं तेजस्तप्तायसपिण्डादिगतम् । अनुद्भूतरूपस्पर्शं तेजो नयनेन्द्रियम् । अभिभूतरूपस्पर्शं तेजः सुवर्णम् । अभिभवस्तु बलवद्भिः पार्थिवरूपादिभिरिति द्रष्टव्यम् । तयोरेव रूपस्पर्शयोरेकैकानुद्भवे सति द्विविधं तेजः । तत्रोद्भूतरूपमनुद्भूतस्पर्शं तेजः प्रदीपप्रभामण्डलम् । अनुद्भूतरूपमुद्भूतस्पर्शं तेजस्तप्तवारिगतम् । एवमभिभवेऽपि त्रैविध्यं द्रष्टव्यम् । तत्र सुवर्णे रूपस्पर्शयोरुभयोरभिभवः । चन्द्रिकायां जलस्पर्शादुष्णस्पर्शाभिभवः । झटिति प्रक्षिप्तजले तप्तायसपिण्डादौ रूपाभिभव इति । अरूपत्वे सति स्पर्शवान् वायुः । स च मन्दवाताताननिःश्वासवातादिरूपस्त्वगिन्द्रियरूपश्च । तत्रेन्द्रियभूतानां भूतानामर्थापत्तिगम्यत्वं प्रागेव समर्थितम् । अन्यानि तु प्रत्यक्षलक्ष्याणि । तत्र पृथिव्यप्तेजसां प्रत्यक्षत्वे न विवादः । वायुरनुष्णाशीतस्पर्शानुमेय इति तार्किकाः । तथाहि—योऽयं वायौ वात्यनुष्णाशीतस्पर्शोऽनुभूयते, स तु नभसोऽस्पर्शवत्त्वान्न तद्गुणः ।

नापि जलतेजसोः, तयोः शीतोष्णस्पर्शत्वात् । नापि पृथिव्याः, तस्या नयनेन्द्रियग्राह्यत्वेनानुपलम्भनिरस्तत्वात् । अतः पारिशेष्याद् वायुसिद्धिरिति । तदिदमज्ञानविजृम्भितम् । शीतादिषु स्पर्शविशेषेषूपलभ्यमानेषु शीतो वायुरुष्णो वायुरनुष्णाशीतो वायुरिति वायुद्रव्यस्यैकस्य प्रत्यभिज्ञायमानत्वात् कृष्णो घटः पीतो घटः श्वेतो घट इतिवत् सकलस्पर्शानुगतमेकमेव वायुद्रव्यं प्रत्यभिजानतां भवतां 'स्पर्शमात्रमेव वयं प्रत्यभिजानीमो नान्यत् किञ्चिदि'ति वचनमनुभवविरुद्धमेव । प्रयोगश्च भवति । 'वायुः प्रत्य(क्षत्वान्म ? क्षः म)हत्त्वानिन्द्रियत्वे सति स्पर्शवत्त्वाद् भूतत्वाद् वा घटवदि'ति । यत् पुनः 'वायुरप्रत्यक्षः अनात्मत्वे सति नीरूपद्रव्यत्वान्मनोवदि'त्युक्तं, तदरूपिद्रव्याणामपि दिक्कालादीनामस्मन्मते प्रत्यक्षत्वात् तेष्वनैकान्तिकम् । नापि पारिशेष्याद् वायुसिद्धिः । असिद्धद्रव्यकल्पनातः सिद्धस्यैव द्रव्यस्य गुणान्तरकल्पनाया लघीयस्तरत्वात् । कल्पनालाघवस्यैव हि गुणवत्तरत्वमाहुराचार्याः—

"कल्पनालाघवं यत्र तं पक्षं रोचयामहे ।
कल्पनागौरवं यत्र तं पक्षं न सहामहे ॥"

इति । अतस्त्वगिन्द्रियप्रत्यक्षो वायुः । नेत्रेन्द्रियमात्रग्राह्यमालोकाभावप्रकाश्यकृष्णरूपं तमः ।

**कलायकोमलच्छायं दर्शनीयं भृशं दृशाम् ।**
**तमः कृष्णं विजानीयादाधारं गुणकर्मणाम् ॥ ९ ॥**

तत् पुनरन्धतमसादिरूपम् । 'आलोकाभावस्तम' इति तार्किकाः । तदयुक्तम् ।

**गुणकर्मादिसद्भावादस्तीति प्रतिभासतः ।**
**प्रतियोग्यस्मृतेश्चैव भावरूपं ध्रुवं तमः ॥ १० ॥**

**नीलादिरूपयुक्तस्य स्पर्शवत्त्वं च दृश्यते ।**
**स्पर्शाभावान्न रूपि स्यात् तम इत्यप्यपेशलम् ॥ ११ ॥**

**स्पर्शयुक्तस्य सर्वत्र रूपवत्त्वं च दृश्यते ।**
**रूपाभावेन वायोरप्यस्पर्शत्वप्रसङ्गतः ॥ १२ ॥**

स्पष्टदृष्टरूपस्पर्शत्वं चोभयत्रापि तुल्यमेव । 'आलोकदर्शने सति ग्राहकभूतात्मस्वरूपोपलम्भात् सामान्यतो नीलद्रव्यस्मरणे सति स्मृतित्वमगृह्णतस्तयोर्भेदाग्रहनिबन्धनस्तमोनैल्यव्यवहार' इति गुरुमतम् । तदपि हास्यम् । आत्मग्रहणस्य नैल्यस्मृत्या भेदाग्रहे सतीदं नील(मिति)व्यवहारमपहायाहं नीलमिति व्यवहारस्वीकारप्रसङ्गाद्, देशान्तरे कालान्तरे चाप्यबाधितस्य प्रत्ययस्य भ्रान्तिमूलत्वकल्पनानुपपत्तेश्च । ननु तमसश्चाक्षुषत्वे पिहितलोचनस्य पटलपिहितलोचनस्यात्यन्तान्धस्य च कथं नीलं तम इति प्रतीतिः । तत्र पटलपिहितलोचनस्य पिहितलोचनस्य च तत्तदावरणच्छायाग्रहणात् तमोव्यवहारः । महत्त्वभ्रमस्तु सान्निध्यदोषात् । पक्ष्मादीनाम् अग्रहणं तु निमीलनदशायामालोकाभावात् । अन्यत् पुनरार्जवस्थित्यभावादिति द्रष्टव्यम् । अत्यन्तान्धानां पुनर्नीलबुद्धिरेव सिद्धा । 'तमसीव प्रविष्टोऽहमि' त्यादिवाक्यं पुनः 'अमृतमिव पाथः पीतमि'त्यादिवाक्यवद् वाक्यान्तरश्रवणजनितसंस्कारवशादिति द्रष्टव्यम् । 'तमः कृष्णं व्यक्तमस्थित' इति श्रुतिरपि तमसो नीलरूपतामनुवदति ।

तस्माद् 'द्रव्यान्तरं तमः नीलात्मकत्वाद् नीलोत्पलनैल्यवत् । पृथिवीगुणस्तम इति कौमारिलेष्वेव केचिन्मान(कि)रणावलीकारादयः प्राहुः । तदप्यनुमन्यामहे । अतस्तमो द्रव्यं गुणो वा । गुणपक्षे दश द्रव्याणि । एतानि * पञ्चावयविद्रव्याणि । अवयवाश्च परमाणवः । अत्रावयवव्यतिरिक्तावयविसद्भावं प्रतिषेधयन्तो बौद्धास्तु 'महानेको घट' इत्याद्यबाधितप्रत्यक्षप्रमाणबलेन परिहर्तव्याः । अत्र तार्किकाः पुनरस्मदादीनामनुमानैकगम्यान् योगिनां प्रत्यक्षोपलक्ष्यांश्च कांश्चन पदार्थविशेषान् परमाणूनाद्रियन्ते तैरिदमखिलमवयविद्रव्यं कुलाल इव घटं परमेश्वरः सृष्टिकाले द्व्यणुकादिक्रमेण विरचयति, कविरिव काव्यमखिलमपि वेदराशिमारचयति, संहारकाले च बालक इव घटं चतुर्विधमवयविद्रव्यं परमाणुपर्यन्तं विनाशयतीति प्रतिपन्नाः ।

जालरन्ध्रविसरद्रवितेजो-
जालभासुरपदार्थविशेषान् ।
अल्पकानिह पुनः परमाणून्
कल्पयन्ति न कुमारिलशिष्याः ॥ १३ ॥

तदतिरिक्तप्रमाणाभावादनुपयोगाच्च तदतिरिक्तकल्पनस्य । नन्वस्त्येव तदतिरिक्ते प्रमाणम् । 'वातायनातपगतः पदार्थोऽवयवी, महत्त्वाद् घटवदि'त्यनुमानेन तस्य स्वन्यूनपरिमाणार-

---

* पृथिव्यप्तेजोवायुतमांसि ।

म्भकसिद्धिः। न च महत्त्वमसिद्धं, दृश्यद्रव्यत्वहेतुना घटादिवन्महत्त्वसमर्थनादित्यन्ते तदतिरिक्तप्रमाणसिद्धिरिति। **मैवम्**। आपेक्षिके हि पदार्थानां महत्त्वाल्पत्वे। यद्येतस्मादपि न्यूनपरिमाणः कश्चिदुपलभ्येत, तर्हि (त?म)हानेवायम्। स च नोपलभ्यते। अनुमानं पुनर्योग्यानुपलम्भबाधितविषयत्वादप्रमाणम्। एवमपि दृश्यस्य घटादिवन्महत्त्वं साधयतां तार्किकाणामवयव्यारम्भकस्य मृत्पिण्डादेरवयवित्वमहत्त्वयोर्दर्शनेन तदारम्भकाणामप्येवमणुतरतमभावस्य न क्वचिदपि विश्रमः। तथा च सति मशकमत्तमातङ्गयोरप्यनन्तावयवपरिप्रापितत्वाविशेषेण तुल्यपरिमाणत्वादिबहुविधदृष्टविरोधः प्रसज्येत। तस्माल्लोकसिद्धानेव वयं परमाणूनाद्रियामहे। नापि योगिप्रत्यक्षात् तत्सिद्धिः। 'योगिनामपि प्रत्यक्षमिन्द्रियसन्निकर्षजं प्रत्यक्षत्वाद् अस्मदादिप्रत्यक्षवत्, योगीन्द्रियमतीन्द्रियाविषयकं न भवति इन्द्रियत्वाद् अस्मदादीन्द्रियवदि'ति योगिप्रत्यक्षस्याप्यस्मदादिप्रत्यक्षानतिरेकसिद्धेस्तदतिरिक्तपरमाणुसिद्धावपि नास्मन्मते किञ्चन हीयत इत्यास्तामेतत्। नापीश्वरारब्धं जगद्, वेदव्यतिरेकेणेश्वरसद्भावे प्रमाणाभावात्। अस्तु वेदादेव तत्सिद्धिरिति चेद्, न। वेदानामपीश्वरकर्तृकत्वं साधयतां तार्किकाणां वेदप्रामाण्यादीश्वरसिद्धिः, ईश्वरप्रामाण्याच्च वेदसिद्धिरितीतरेतराश्रयचक्रकयोः प्रसङ्गात्। **ननु** 'क्षित्यादिकं सकर्तृकं कार्यत्वाद् घटवदि'त्यनुमानं तत्र प्रमाणमिति चेद्, **न**। विकल्पासहत्वात्। तथाहि—ईश्वरः शरीरी वा न वा। नाद्यः, उपलम्भयोग्यत्वे सति कैश्चिदप्यनुपलम्भाद् भवद्भिरप्यनभ्युपगमाच्च। नाप्यशरीरी। अश-

रीरिणः करचरणाद्यवयवाभावेन जगन्निर्माणाशक्तेः । अपिच—

**शरीरेण विना यन्न कर्ता कुत्रापि दृश्यते ।**
**विशेषणविरुद्धं तत् कर्तृत्वमशरीरिणः ॥ १४ ॥**

यथा विशेषविरोधस्यानुमानदूषणत्वं, तथानुमाननिर्णये वर्णितम् । किञ्च घटादयः शरीरिकर्तृकाः क्षित्यादयः पुनरीश्वरकर्तृका इति येन सन्निवेशविशेषेण भवद्भिरप्यवधार्यते, घटादीनां तादृशसन्निवेशविशेषवत्त्वं सकर्तृकत्व उपाधिरिति कार्यत्वमप्रयोजको हेतुः । किञ्च आत्मत्वं क्षित्यादिकर्तृव्यक्तिसमवेतं न भवति, जातित्वाद् गोत्ववत् । एवमेव गोत्वदृष्टान्तेन सत्त्वपर्यन्तं समर्थनात् प्रतिहेतुविरुद्धं च कार्यत्वम् । इत्थं निरस्ते परमते स्वपक्षस्थापनार्थमनुमानमुच्यते । क्षित्यादयः कर्तृशून्याः, शरीरिजन्यत्वाभावाद्, आत्मवदिति । **ननु** क्षित्यादीनामकर्तृ(क)त्वे कार्यत्वमेव हीयेत । उपादाननिमित्तासमवायिभेदेन त्रिविधं हि कारणम् । तत्र यत् कार्यमपि स्वात्मतयोपादत्ते, तदुपादानकारणम् यथा तन्तवः पटस्य । उपादानप्रत्यासन्नमनन्यथासिद्धमसमवायिकारणम् । यथा तस्यैव तन्तुसंयोगः । उक्तकारणद्वयानन्तर्भूतं कारणं निमित्तकारणम् । यथा तन्तुवायवेमादयः । तस्मात् क्षित्यादीनां तदभावे कथं कार्यत्वम् । **उच्यते** । नास्मन्मते कार्योत्पत्तौ त्रिविधकारणाकाङ्क्षा । जायते हि भूतभविष्यतोर्विषययोः समवाय्यसमवायिनिरपेक्षेण निमित्तमात्रेण ज्ञानेनैव प्राकट्याभिधानं कार्यम् । अतः कारणमात्रेण विनैव कार्योत्पत्त्यनुपपत्तिरिति कारणमात्रमेव कल्प्यम् । कर्त्रादिकं तु यथादर्श(न)मेवाङ्गीक्रियते । **ननु**

कर्त्रधिष्ठितत्वाभावे कथं कारणानां कार्यानुगुणतया परस्परोपसर्पणम् । न हि तन्तुवायमन्तरेण तन्तुतुरीप्रभृतयः पटोत्पत्तये परस्परमुपसर्पन्ति । यथा भवन्मते क्षित्यादिकर्तुः शरीरव्यापारेण विनैव कारणानां परस्परोपसर्पणं, तथास्मन्मतेऽपीति ब्रूमः । अपिच सिद्धेऽपीश्वरे कर्तरि भवन्मते सकलकालदेशेषु तुल्यतया प्रवृत्तयोर्विद्वेषादिकारणानां (कथं) परस्परोपसर्पणहेतुत्वम् । तत्तच्चेतनगततत्तददृष्टपरिपाकवशादिति चेत्, तर्हि तेनैव कारणानां परस्परोपसर्पणादिसिद्धेः किमीश्वरपरिकल्पनव्यसनेनेति सिद्धस्तार्किकेश्वरनिरासः । वैदिकेश्वरः परमकारुणिकः पुनरस्माकमनुगुण एव । एवमकर्तृकत्वसाधनात् प्रपञ्चस्यात्यन्तिको विनाशोऽपि परिहृतो भवति ।

लोकस्यात्यन्तिको नाशो वैदिकानां न सम्मतः ।
महतां वेदमार्गाणां स्रोतोभङ्गप्रसङ्गतः ॥ १५ ॥

ईश्वरो ननु लोकादौ वेदानपि विधास्यति ।
ततो न वेदमार्गाणां विच्छेदो दोषमावहेत् ॥ १६ ॥

प्रयोगश्च भवति । 'वेदवाक्यानि पौरुषेयाणि वाक्यत्वाद् भारतादिवाक्यवदि'ति । अत्र वदामः ।

सोपाधिकं विरुद्धं च विशेषप्रातिहेतुभिः ।
वाक्यत्वं नैव वेदानां पौरुषेयत्वसाधकम् ॥ १७ ॥

प्रमाणवाक्यानां पुरुषस्वातन्त्र्ये तावद(स्मा ? क्षा)दिप्रमाणान्तरोपलक्ष्यमूलत्वमुपाधिः । न चैवं सत्यष्टकादिकर्तव्य-

त्वप्रतिपादकानां मन्वादिवाक्यानामप्यपौरुषेयत्वापत्तिः । तेषामपि वेदवाक्यरूपमानान्तरोपलक्ष्यमूलत्वात् । मातापितृसम्बन्धोत्पन्नपाञ्चभौतिकशरीरत्वादिगुणविशिष्टानामेव पुरुषाणां वाक्यस्वातन्त्र्यदर्शनादताहशस्य स्वातन्त्र्यकल्पनं विशेषविरुद्धं च । 'विप्रतिपन्नः कालो न वेदशून्यः कालत्वात् सम्प्रतिपन्नकालवत्, विमतं वेदाध्ययनं परतन्त्राध्येतृकं वेदाध्ययनत्वात् सम्प्रतिपन्नाध्ययनवद्, आत्मत्वं वेदकर्तृव्यक्तिसमवेतं न भवति जातित्वाद् गोत्ववदि'ति प्रतिहेतुविरुद्धं च वाक्यत्वम् । नन्वेवमेव भारतादीनामप्यपौरुषेयत्वं साधनीयमिति चेद्, न । तेषां दृढतरकर्तृस्मरणबाधितविषयत्वाद् नानुपलब्धे न निर्णीतेऽर्थे न्यायः प्रवर्तत इति भवद्भिरभ्युपगतत्वाच्च । ननु श्रूयत एव वेदवाक्येषु वेदानां पौरुषेयत्वं 'वक्त्रेभ्यो वेदास्तस्य निःसृताः, ऋग्वेद एवाग्नेरजायत, यजुर्वेदो वायोः, सामवेद आदित्यात्', 'तस्माद् यज्ञात् सर्वहुतः ऋचः सामानि जज्ञिरे' इत्यादिषु । अतः कथमपौरुषेयत्वमिति चेद्, मैवम् । एतानि हि वाक्यानि परस्परविरुद्धानि प्रमाणान्तरबाधितविषयाणि च । 'आदित्यो यूप' इत्यादिवाक्यवदेतेषामर्थवादत्वपरिकल्पनात् । काठकादिसमाख्यापि तस्य (स्या)देव । कठादेः प्रकृष्टवचनतया तच्छिष्याणां कठानामाम्नायः काठकमित्येतस्मिन्नर्थे वुञ्प्रत्ययस्मरणान्न कठादीनां वेदवाक्यविषयं प्रति स्वातन्त्र्यमवगमयति । अतो न वेदवाक्यानां पुरुषानुप्रवेशाभावादप्रामाण्यगन्धोऽपि । पुरुषकृता हि शब्दे दोषाः । ननु पुरुषगुणनिबन्धना एव शब्दे गुणाः, यथा रामायणादिषु । तस्मात् पुरुषाभावे पुरुषगुणस्य दूरापा-

स्तत्वादप्रामाण्यं वेदवाक्यानां तदवस्थमेव । **स्यादेतदेवं,** यदि गुणात् प्रामाण्यमित्यभ्युपगम्यते । न चैवमभ्युपगतमस्माभिः । तस्माद् गुणाभावेऽपि दोषाभावमात्रेण वेदानां प्रामाण्योपपत्तिः । अपिच, स्वत एव सर्वप्रमाणानां प्रामाण्यम् । अप्रामाण्यं तु कारणदोषैरापाद्यते । यथा चक्षुरादीनां पित्तादिषु दोषेषु सत्सु शङ्खादिपीततामतिः, तदभावे च यथार्थभूतशुक्लिमावधारणम् ।

**अत्र प्रामाण्यविषये वादिनो बहुधा जगुः ।**
**वदन्ति केचित् प्रामाण्यमप्रामाण्यमिति स्वतः ॥१८॥**

**उभयं परतः प्राहुरक्षपात्पक्षिलादयः ।**
**अप्रामाण्यं स्वतस्तत्र प्रामाण्यं परतो विदुः ॥ १९ ॥**

**बौद्धा मीमांसकास्तत्र प्रामाण्यं तु स्वतो विदुः ।**
**अप्रामाण्यं तु परतस्तत्र चिन्ता विधीयते ॥ २० ॥**

अत्र प्रामाण्याप्रामाण्ये सकलप्रमाणेषु स्वत एव वर्तमाने कारणगुणदोषाभ्यामभिव्यज्येते, अत्यन्तासतामुत्पत्त्यनुपपत्तेः, उपपत्तौ वा गगनकुसुमादीनामप्युत्पत्तिप्रसङ्गात् । तस्मात् कारणभूतेषु मृदादिषु (प्रामाण्या)प्रामाण्ययोरप्यभिव्यक्तिरेवेति सत्कार्यवादिनां साङ्ख्यादीनां मतम् । **अत्र वदामः** । यदि सर्वत्राप्यसतामनुत्पत्तिरेव, तर्हि मृदादिगतस्य घटादेः कारकव्यापारात् पूर्वमभिव्यक्तिरस्ति वा न वा । यद्यस्ति, तर्हि कारकव्यापारानर्थक्यं तदवस्थमेव । अथ नास्ति, तर्हि कथमसदुत्पत्तिः प्रतिषिध्येत । असत्या एवाभिव्यक्तेरुत्पत्तिस्वीकारात् ।

तस्मान्नैतावता प्रामाण्याप्रामाण्ययोरपि स्वतस्त्वमङ्गीकर्तव्यम् । अपिच, पयःपावकयोरिवात्यन्तविरुद्धयोः प्रामाण्याप्रामाण्ययोः कथमेकस्मिन्नेव ज्ञाने समावेशोपपत्तिः । तस्मादुभयोरपि स्वतस्त्ववादिनो निरस्ताः । गुणात् प्रामाण्यं दोषादप्रामाण्यमित्युभयमपि परत इति तार्किकाः । तथाहि— उत्पत्तौ प्रतिपत्तौ च परत एव प्रामाण्यम् । तत्र तावदुत्पत्तौ ज्ञानहेतुमात्राधीनं यदि प्रामाण्यं स्यात्, तर्ह्यप्रामाण्यज्ञानेष्वपि प्रामाण्यं स्यात्, तत्रापि ज्ञानहेतूनां सम्भवाद्, असम्भवे वा ज्ञानोत्पत्तेरेवानुपपत्तेः । नाप्यप्रामाण्यं ज्ञानहेतुमात्राधीनम्, उक्तेन न्यायेन प्रमाणज्ञानानामप्यप्रामाण्यप्रसङ्गात् । तस्मादिन्द्रियादिगुणादेव प्रामाण्योद्भवः, तद्दोषादप्रामाण्योद्भव इति स्थितम् । उभयोरुत्पत्तौ परतस्त्वम् । तथा प्रतिपत्तावपि परतस्त्वमेव युक्तं कल्पयितुम् । यदि ज्ञानग्राहकप्रमाणेनैव प्रामाण्यमप्रामाण्यं वा गृह्यते, तर्हि कथं ममेदमुत्पन्नं जलज्ञानं प्रमाणमप्रमाणं वेति संशयोपपत्तिः । न ह्यन्यतरस्वरूपावधारणे शङ्कावतरति, अतिप्रसङ्गात् । कथं तर्हि प्रामाण्यग्रहणम् । उच्यते । 'ममेदमुत्पन्नं ज्ञानं प्रमाणं समर्थप्रवृत्तिजनकत्वाद् यन्न समर्थां प्रवृत्तिं जनयति न तत् प्रमाणं यथा प्रमाणाभासः' इत्याद्यनुमानात् । तस्मादर्थक्रियानन्तरमेव प्रामाण्यनिश्चयः । एवमप्रामाण्यनिश्चयेऽप्यनुमानं द्रष्टव्यम् । इति सिद्धमुभयमुभयस्मात् परत इति । अत्र वदामः । यदि ज्ञानस्य प्रामाण्यमप्रामाण्यमपि हेत्वन्तराधीनं, किमात्मकं तर्हि ज्ञानस्वरूपम् । न हि प्रामाण्याप्रामाण्यव्यतिरिक्तं किञ्चिदपि स्वरूपमस्ति विज्ञानस्य । ननु सन्देहात्मकमस्तु । न ।

प्रतीतिविरोधात् सन्देहस्याप्रामाण्यपक्षनिक्षे(प ? पे)णाप्रामाण्यस्य स्वतस्त्वप्रसङ्गाच्च । यत्तु प्रामाण्यस्य ज्ञानहेतुमात्राधीनत्वे शुक्तिरजतादिज्ञानेष्वपि प्रामाण्यप्रसङ्ग इत्युक्तं, तत् तत्रापि पुरोवर्तित्वसत्त्वशुक्लत्वभास्वरत्वाद्यंशेषु प्रामाण्यस्यानुवृत्तेरस्माकमनुकूलमेव । यत् पुनरुदयनेन प्रामाण्यस्य परायत्तत्वेऽनुमानं प्रयुक्तं 'प्रमा ज्ञानहेत्वतिरिक्तहेत्वधीना कार्यत्वे सति तद्विशेषत्वाद् अप्रमावदि'ति, तदप्यसत् । 'प्रमा गुणदोषाभावयोरन्यतरा(ही ? धी)ना न भवति ज्ञानत्वाद् अप्रमावदि'त्यनेनानुमानेन बाधितविषयत्वात् । सविशेषणहेतुजात् प्राचीनानुमानादविशेषणहेतुजस्यास्यानुमानस्य शीघ्रप्रवृत्त्युपपत्तेर्युक्तं च प्राचीनानुमानस्य बाधितविषयत्वमिति सिद्धमुत्पत्तौ स्वतस्त्वम् । एवं प्रतिपत्तावपि स्वतस्त्वमेव युक्तमभ्युपगन्तुम् । तथाहि— तथाभूतोऽयमर्थ इत्यर्थस्य तथात्वावधारणात् प्रामाण्यसंवित्तिः, अतथाभूतोऽयमर्थ इत्यतथात्वावधारणादप्रामाण्यसंवित्तिः । तत्र तथाभूतोऽयमर्थ इति तथात्वावधारणं ज्ञा(नं ? न)स्वरूपाधीनमिति तादृशावधारणगम्यं प्रामाण्यं स्वतोऽवगम्यत इत्युच्यते । अतथाभूतोऽयमर्थ इत्यतथाभावावधारणं तु कारणदोषावगमाद् बाधकप्रत्ययाद् वा परतो जायत इति तादृशमवधारणगम्यमप्रामाण्यं परतोऽवगम्यत इत्युच्यते । तस्मादतथाभूतमप्यर्थं तथाभूतोऽयमर्थ इत्येव ज्ञानस्वरूपमवगमयति । अर्थतथात्वनिश्चयस्य भ्रमरूपत्वात् प्रामाण्यनिश्चयोऽपि तत्र भ्रम इत्येव विशेषः । भ्रमत्वं तु तस्य बाधकप्रत्ययावसेयमेव । न चैतादृशभ्रमदर्शनादर्थतथात्वावधारणेन प्रामाण्यानुमानं दुष्करमिति वाच्यम् ।

बाष्पे धूमभ्रमदर्शनेऽपि धूमादग्न्यनुमानस्य सुकरत्वात् । न च तथाभूतोऽयमर्थ इत्यर्थतथात्वावधारणमर्थक्रियाज्ञानादिलक्षणपरापेक्षमिति वाच्यम् । विकल्पासहत्वात् । तथाहि—किमिदमर्थक्रियादिज्ञानं स्वत एव प्रमाणम्, उत परतः । न तावत् परतः, तस्याप्यर्थक्रियाद्यन्तरापेक्षत्वेनानवस्थाप्रसङ्गात् । अथ स्वत एव, किमपराद्धमाद्यज्ञानेन, येन तस्य परतःप्रामाण्यपक्षनिक्षेपः । यत्तु समर्थप्रवृत्तिजनकत्वेन हेतुना प्रामाण्यमाद्यज्ञानस्यानुमेयमित्युक्तं, तदप्ययुक्तम् । स्वप्ने कामिनीरूपदर्शनादिरूपस्यापूर्वज्ञानस्य तदालिङ्गनादिरूपसमर्थप्रवृत्तिजनकत्वेऽपि प्रामाण्याभावेन तत्रानैकान्त्यात् । यत् पुनर्ममेदमुत्पन्नं ज्ञानं प्रमाणमप्रमाणं वेति सन्देहदर्शनात् प्रामाण्यस्य न स्वतोऽवधारणमित्युक्तं, तदप्यसत् । सर्वेषामपि ज्ञाना(नां) सन्देहग्रस्त-(त्व?त्वा)दर्शनात् । यत्र पुनः कुत्रचिद् भ्रमदर्शनात् किं तादृशमिदं ज्ञानम् उतान्यादृशमिति संशयो भवति , तत्रापि ज्ञानस्वरूपं प्रथमत एव विषयतथात्वमवधारयति । दूरत्वादीनां विषयदोषाणां, तिमिरादीनां करणदोषाणां, पारिप्लवादीनां मनोदोषाणां चाभावावगमः पुनरतथाभावशङ्कोच्छेदमात्र एवोपकरोति, न तु ज्ञानस्वरूपाधीने विषयतथात्वावधारणे तदधीने प्रामाण्यनिश्चये च । तस्मात् स्वशब्दस्यात्मीयवाचित्वेन ज्ञानस्वरूपाधीना(त?)दर्थतथात्वावधारणादवगम्यमानस्य प्रामाण्यस्य ज्ञप्तावपि स्वतस्त्वं सिद्धम् । यत्तु 'प्रामाण्यं परतो ज्ञायतेऽनभ्यासदशायां सांशयिकत्वाद् अप्रामाण्यवद्' इत्युदयनोक्तमनुमानं, तदस्मन्मतेऽपि विषयतथात्वावगमरूपात् परत एव प्रा-

माण्यावधारणात् सिद्धसाधनं द्रष्टव्यम् । एताभिरेव युक्तिभिरप्रामाण्यं स्वतः प्रामाण्यं परत इति बौद्धसिद्धान्तोऽपि विरुद्धो वेदितव्य इत्यलमतिप्रसङ्गेन । सिद्धानि तावत् तमःपञ्चमान्यवयविद्रव्याणि तदारम्भकाण्यवयवद्रव्याणि च ।

**स्वरूपाणि निरूप्यन्ते व्योमादीनामथ क्रमात् ।**
**नित्यानि चानवयवद्रव्याणि च विभूनि च ॥ २१ ॥**

शाङ्कराः पुनः 'आत्मन आकाशः सम्भूत' इत्यादि(श्रु)त्यनुरोधेन गगनादीनामनित्यत्वमाहुः । तदयुक्तम् । 'विवादपदानि द्रव्याणि नित्यानि निरवयवद्रव्यत्वाद् आत्मवदि'त्याद्यनुमानविरोधेन श्रुतेर्यथाश्रुतेऽर्थे प्रामाण्यानुपपत्तेः । एतानि मनोव्यतिरिक्तानि प्रत्यक्षाणि । तत्र च—

**व्योमकालदिशामादौ प्रत्यक्षत्वं समर्थ्यते ।**
**अनिष्टं भट्टपादोक्तिमाधुर्यानभिलाषिणाम् ॥ २२ ॥**

'दिक्कालाकाशाः प्रत्यक्षाः अमनस्त्वे सति विभुत्वाद् आत्मवत्' । अपिच, दिक्कालाकाशा यदि न प्रत्यक्षाः, तर्हि तेषां स्वरूपमेव हीयेत, प्रत्यक्षव्यतिरेकेण तेषु प्रमाणाभावात् । नन्वस्त्येव तत्र प्रमाणम् । शब्दस्य विशेषगुणत्वाद् गुणस्य च गुणिनमन्तरेणानुपपत्तेः शब्दगुणाश्रयत्वेन तावदाकाशसिद्धिः, कालस्तु युगपदादिप्रत्ययानुमेयः, दिक् पुनः पूर्वापरादिप्रत्ययानुमेयेति कथं तेषु प्रमाणाभावः । अत्र वदामः । यत् तावदुक्तं शब्दगुणाश्रयत्वेनाकाशसिद्धिरिति, तदयुक्तम् । शब्दस्य गुण-

त्वानुपपत्तेर्वक्ष्यमाणत्वात् । भवतु वा गुणत्वं, तथापि कथं दिक्का-
लादिव्यतिरिक्ताश्रयसिद्धिः, असिद्धद्रव्यकल्पनतः सिद्धस्यैव द्र-
व्यस्य गुणान्तरकल्पनाया लघीयस्तरत्वात् । किञ्च, नयनोन्मील-
नानन्तरमेवाबालवृद्धमध्यक्षतयाध्यवसीयमानस्याकाशस्याप्रत्य-
क्षत्वं वदन्तः प्राभाकरादयः करतलकलितमामलक(एव? फल)-
मपि प्रत्यक्षानुपलक्ष्यमिति वदेयुरेव । नापि कालो युगपदादिप्र-
त्ययानुमेयः । तथाहि— युगपदागतौ देवदत्तयज्ञदत्तौ, चिरेणा-
गतः पुत्र इत्यादिप्रत्ययाः किं कालविषयाः (उत) अन्यविषयाः ।
न तावदन्यविषयाः, तेषां लिङ्गानां प्रत्यक्षेण कालसम्बन्धानव-
धारणे पूर्ववत् पारिशेष्यासिद्धेः । सम्बन्धावधारणे च कालस्य
प्रत्यक्षत्वप्रसङ्गात् । अथ कालविषयाः, कालविषयत्वे *विरुद्ध-
जन्या लिङ्गजन्या वा । न तावल्लिङ्गजन्याः, युगपदादिप्रत्यया-
तिरिक्तलिङ्गानङ्गीकरणात् । युगपदादिप्रत्ययानामेव लिङ्गत्वे चा-
त्माश्रयप्रसङ्गात् । अथाक्षजन्याः, तर्हि प्रत्यक्षत्वमेव कालस्या-
पन्नम् । युगपदादिप्रत्ययानामक्षजन्यत्वकालविषयत्वयोः स्थित-
त्वात् । अतः 'प्रातःकालोऽयं सायंकालोऽयमि'त्यादिप्रत्ययानां
सूर्योदयादिदर्शनानुगृहीतनयनजन्यत्वात् कालस्य प्रत्यक्षत्वं सि-
द्धम् । स च कालः षडिन्द्रियग्राह्य इति पूर्वमेवोक्तम् । एवं
दिशोऽपि पूर्वापरादिप्रत्ययानां नेत्रमात्राधीनत्वात् कालविषय-
त्वाच्च प्रत्यक्षत्वं समर्थनीयम् । पूर्वापरादिप्रत्ययानां लिङ्गत्वेन

---

* युगपदादिप्रत्ययात्मकलिङ्गविरुद्धाक्षजन्या इत्यर्थः ।

पारिशेष्याद् द्रव्यान्तरकल्पनं तु पूर्वोक्तनयेन पारिशेष्यासिद्धिप्रभृतिभिर्निराकरणीयम् । तस्माद् व्योमादीनामप्रत्यक्षत्वसाधनपराणामनुमानानां तत्प्रतीत्यन्यथानुपपत्तिप्रसूतार्थापत्तिबाधितविषयत्वात् सिद्धमप्रामाण्यम् । तत्राकाशो विभुरपि घटाद्युपाधिवशाद् घटाकाशादिव्यपदेशं लभते, कर्णशष्कुल्युपाधिवशेन श्रोत्रेन्द्रियव्यपदेशं च । कालस्यापि विभुत्वेऽप्युपाधिवशादौपाधिको भेदव्यवहारोऽस्ति । स यथा—पञ्चदश निमेषाः काष्ठा । ताभिस्त्रिंशता मुहूर्तः । ते त्रिंशदहोरात्रः । तैस्तावद्भिर्मासः । तैर्द्वादशभिः संवत्सरः । तैश्च क्रमेण युगादय इति । एवं दिशोऽपि पूर्वापराद्युपाधिवशाद् भेदव्यवहारो द्रष्टव्यः ॥

आत्मा चैतन्याश्रयः । स च मानसप्रत्यक्षगम्यः । अत्र प्राभाकरास्तावदिदमहं जानामीति सर्वार्थवित्तिषु व्यवहारदर्शनाद् आत्म‡स्वात्मनोरप्यप्रकाशमानत्वे तदनुपपत्तेरात्मस्वात्मनोः कर्तृतया वित्तितया च प्रतीयमानत्वमभ्युपगच्छन्ति । तत्राहंप्रत्ययगम्यत्वेनात्मनः प्रत्यक्षत्वं, ज्ञानस्य तु स्वयंप्रकाशत्वेनेति च व्यवस्थां प्रतिपेदिरे । तत्र ज्ञानस्य स्वयंप्रकाशत्वमुपरिष्टान्निराकरिष्यामः । आत्मा तु नाहंप्रत्ययगम्यः, सर्वत्रार्थवित्तिष्वपि जानामीति व्यवहारादर्शनात् । यत् पुनरत्र शालिकनाथेन कथितम् 'अवश्यं च ज्ञातुर(व)भासो ज्ञेयानु(भा? भ)वेष्वनुवर्तेत इत्यास्थेयम्, अन्यथा स्वपरवेद्ययोरनतिशय' इति, तदप्ययुक्तम् । ज्ञानस्य स्वात्मसमवेतत्वमात्रेणैवातिशयसिद्धेः ।

‡ स्वात्मपदं ज्ञानार्थकम् ।

न च स्वात्मसमवेतत्वावगमस्यापि व्यवहाराङ्गत्वमस्तीति वाच्यम्, ऐन्द्रियकज्ञानेष्विन्द्रियावगमस्यापि व्यवहाराङ्गत्वप्रसङ्गात् । किञ्च —

अक्षसम्बन्धहीनात्मस्वात्मप्रत्यक्षतार्थिनः ।
प्रत्यक्षशब्दव्युत्पत्तिः कथङ्कारं भवेद् गुरोः ॥ २३ ॥

तस्माद् यथा दिगादीनां पूर्वापरादिप्रत्ययानुमेयत्वं भवद्भिरभ्युपगम्यते, तद्वदात्मनोऽप्यहंप्रत्ययानुमेयत्वमेव युक्तमभ्युपगन्तुं, नाक्षसन्निकर्षहीनस्य प्रत्यक्षत्वम् । तस्मात् स्वप्रकाशज्ञानाश्रयत्वेऽप्यात्मनः स्वप्रकाशत्वानभ्युपगमे ज्ञानजन्यस्य तत्प्रकाशस्य घटप्रकाशस्येव कारणान्तरसापेक्षत्वं दुष्परिहरमेव । स्वप्रकाशत्वाभ्युपगमे च सिद्धो राद्धान्तविरोधः । अत्र प्रकाशरूपदहनाद्याश्रयेषु काष्ठादिष्वपि दह्यमानस्यांशस्याङ्गारावस्थत्वेन प्रकाशरूपाद् दहनादभिन्नत्वम् । इतरांशस्य तु घटादिवत् परितः प्रसर्पितेजोऽवयवप्रकाश्यत्वमेवेति न कस्याप्याश्रयत्वेन प्रकाश इत्यवगन्तव्यम् । शाङ्करास्तु ज्ञानज्ञात्रोरेकत्वं मन्यमानाः स्वयंप्रकाशत्वमात्मनः समर्थयन्ति, 'अयं पुरुषः स्वयंज्योतिः' (बृ. ४. ३. ९), 'आत्मैवास्य ज्योतिः' (बृ. ४. ३. ५) इत्यादिवेदान्तवाक्यं च तत्र प्रमाणीकुर्वन्ति । तत्र ज्ञानज्ञात्रोरेकत्वमत्रैव निराकरिष्यते । न च वेदान्तवाक्यात् स्वप्रकाशत्वसिद्धिः । 'समासीन आत्मा जनानाम्' इति श्रुत्यन्तरविरोधाद्, 'आत्मा ज्ञानान्तराधीनप्रकाशः व्यवहार्यत्वाद् घटवदि'त्याद्यनुमानविरोधाच्च । न च व्यवहार्यत्वम-

सिद्धमिति वाच्यम् । आत्मा व्यवहार्यो न भवति इत्यस्यैव व्यवहारस्यात्मगोचरत्वेन स्ववचनविरुद्धत्वात् । नन्वेवं सत्येकस्यैव कर्तृत्वं कर्मत्वं च विरुद्धमिति चेद्, मैवम्। भवन्मते कर्तृत्वकरणत्वकर्मत्वानामिवास्मन्मते कर्तृत्वकर्मत्वयोरप्येकस्यैवोपपत्तेः, आत्मन एव कर्तृत्व(कर्मत्व)योर्लौकिकवैदिकप्रयोगगम्यत्वाच्च। 'आत्मानं जानीही'ति हि लौकिकाः प्रयुञ्जते, 'आत्मा द्रष्टव्यः' (बृ. २. ४. ५) इति श्रूयते च । ज्ञानजन्यफलभागित्वलक्षणं कर्मत्वं पुनरात्मनः स्वयंप्रकाशवादिभिरप्यवश्याश्रयणीयम् , अन्यथात्मन एवाप्रकाशमानत्वप्रसङ्गात् । तस्मान्मानसप्रत्यक्ष एवात्मा ।

स च देहेन्द्रियज्ञानसुखेभ्यो व्यतिरिच्यते ।
नानाभूतो विभुर्नित्यो भोगस्वर्गापवर्गभाक् ॥२४॥

अत्र केचित् स्थूलोऽहं कृशोऽहमित्यादिप्रत्ययानां शरीरगतस्थौल्यकार्श्यादिविषयत्वात् स्थौल्यकार्श्याद्यधिकरणं शरीरमेवात्मेति साङ्गिरन्ते । तदयुक्तम् । आत्मविशेषगुणानां सुखदुःखादीनां शरीरगुणत्वानुपपत्तेः । यदि सुखदुःखादयः शरीरविशेषगुणाः, तर्हि ते यावच्छरीरमवतिष्ठेरन् । न हि ते मृतशरीरेषूपलभ्यन्ते । तस्मात् सुखदुःखादीनामन्याश्रयत्वमवश्याश्रयणीयमिति सिद्धः सुखदुःखाद्याश्रयस्यात्मनस्तदनाश्रयाद् देहाद् भेदः। स्थूलोऽहं कृशोऽहमित्यादिबुद्धिस्तु शरीरात्मनोरत्यन्तसंसृष्टतया तोयौष्ण्यप्रत्ययवदिति द्रष्टव्यम् । दृश्यते च मम शरीरमिति शरीरात्मनोर्भेदव्यपदेशः । न चेन्द्रियाणामात्मत्वम्। तत्र बाह्येन्द्रियाणां भौतिकत्वाद्, भूतेषु चात्मगुणानां

चैतन्यादीनामनुपलम्भात्, कार्यगुणस्य च कारणगुणपूर्वकत्वनियमादचेतनभूतारब्धानां तेषामात्मत्वं निराकरणीयम्। इयमेव युक्तिर्देहात्मवादिनिराकरणेऽपि समर्थेत्यवगन्तव्यम्। अपरोक्षतया सिद्धरूपादात्मनस्तत्समवेतसुखदुःखाद्यापरो(क्ष्या ? क्ष्य)साधनेन्द्रियत्वेन साध्यरूपस्यान्तःकरणस्य भेदावगमः पु(न)रनायाससाध्य एव। न च ज्ञानमेवात्मा। तस्य क्षणिकत्वात्। आत्मनस्तु 'योऽहं प्राग् दुःखमन्वभूवं, स एवेदानीं सुखमनुभवामी'ति पूर्वापरकालयोरेकत्वावगमाद् अक्षणिकत्वसिद्धेः। यस्य मे पूर्वं सुखमासीत्, तस्यैवेदानीं दुःखमनुवर्तत इति पूर्वापरकालयोरात्मन एकत्वावगमेऽपि सुखनिवृत्त्यनुसन्धानविरोधात् सुखरूपत्वमप्यात्मनो निराकरणीयम्। तत्र पुनरौपनिषदाः 'विज्ञानमानन्दं ब्रह्म' (बृ. ३. ९. २८) इत्यादिवेदान्तवाक्यबलादात्मनो विज्ञानानन्दरूपत्वं समर्थयन्ति। न च विज्ञानस्य क्षणिकत्वाद् आत्मनश्च नित्यत्वादात्मनो विज्ञानात्मकत्वमयुक्तमिति वाच्यम्। विज्ञानस्य नित्यत्वाभ्युपगमात्। नीलपीतादिविज्ञानविशेषेष्वपि नीलपीताद्युपहितं विज्ञानमेकमेवेति वयमभ्युपगच्छामः। न च 'विज्ञानमानन्दं ब्रह्म' इत्यत्र त्रयाणामपि पदानामैकार्थ्ये सत्येकेनैव पदेन चरितार्थत्वादितरपदद्वयाम्नानवैयर्थ्यमिति वाच्यम्। व्यवच्छेद्यभेदादेकार्थत्वेऽपि वैयर्थ्यानुपपत्तेः, 'प्रकृष्टप्रकाशश्चन्द्र' इतिवत्। अत्र ख'ल्वस्मिन् ज्योतिर्मण्डले कतमश्चन्द्र' इति चन्द्रप्रतिपादकप्रश्नस्योत्तरभूते 'प्रकृष्टप्रकाशश्चन्द्र' इति वाक्ये प्रकृष्टपदस्याप्रकृष्टनक्षत्रादिकं व्यावर्त्य, प्रकाशपदस्याप्रकाशतिमिरादिकमिति व्यवच्छे-

